कृष्णस्तांपूजयामासपुराध्यानेनयेनच ॥ ९ ॥ श्वेतचम्पकवर्णाभांकोटिचन्द्रसमप्रभाम् ॥ शरत्पार्वणचन्द्रास्यांशरत्पङ्कजलोचनाम् ॥
सुश्रोणींसुनितम्बाञ्चपक्वबिम्बाधरांवराम् ॥ १० ॥ मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिमनोहराम् ॥ ईषद्धास्यप्रसन्नास्यांभक्तानुग्रहका
तराम् ॥ वह्निशुद्धांशुकाधानांरत्नमालाविभूषिताम् ॥ ११ ॥ रत्नकेयूरवलयांरत्नमञ्जीररञ्जिताम् ॥ रत्नकुंडलयुग्मेनविचित्रेणविराजिताम् ॥
सूर्य्यप्रभाच्छादितेनगण्डस्थलविराजिताम् ॥ १२ ॥ अमूल्यरत्ननिर्म्माणग्रैवेयकविभूषिताम् ॥ सद्रत्नसारनिर्म्माणकिरीटमुकुटोज्ज्वला
म् ॥ रत्नाङ्गुलीयसंयुक्तांरत्नपाशकशोभिताम् ॥ १३ ॥ बिभ्रतींकबरीभारंमालतीमाल्यशोभितम् ॥ रूपाधिष्ठातृदेवींश्चगजेन्द्रमन्दगा
मिनीम् ॥ १४ ॥ गोपीभिःसुप्रियाभिश्चसेवितांश्वेतचामरैः ॥ कस्तूरीबिन्दुभिःसार्द्धमधश्चन्दनबिन्दुना ॥ १५ ॥ सिन्दूरबिन्दुनाचारुसीम
न्ताधःस्थलोज्ज्वलाम् ॥ नित्यंसुपूजितांभक्त्याकृष्णेनपरमात्मना ॥ १६ ॥ कृष्णसौभाग्यसंयुक्तांकृष्णप्राणाधिकांवराम् ॥ कृष्णप्राणा
धिदेवींश्चनिर्गुणाञ्चपरात्पराम् ॥ १७ ॥ महाविष्णुविधात्रींश्चदात्रींचसर्वसम्पदाम् ॥ कृष्णभक्तिप्रदांशान्तांमूलप्रकृतिमीश्वरीम् ॥ १८ ॥
वैष्णवींविष्णुमायांचकृष्णप्रेममयींशुभाम् ॥ रासमण्डलमध्यस्थांरत्नसिंहासनस्थिताम् ॥ रासेरासेश्वरयुतांराधांरासेश्वरींभजे ॥
॥ १९ ॥ ध्यात्वापुष्पंमूर्ध्निदत्वापुनर्ध्यायेज्जगत्प्रभुम् ॥ दद्यात्पुष्पंपुनर्ध्यात्वाचोपचाराणिषोडश ॥ २० ॥ आसनंवसनंपाद्यमर्घ्यंगन्धा
नुलेपनम् ॥ धूपंदीपंसुपुष्पंचस्नानीयंरत्नभूषणम् ॥ २१ ॥ नानाप्रकारनैवेद्यंताम्बूलंवासितंजलम् ॥ मधुपर्करत्नतल्पमुपचाराणिषोड
श ॥ २२ ॥ प्रत्येकंवेदमन्त्रेणदत्तंभक्त्याचभूभृता ॥ मन्त्रांश्चश्रूयतांदुर्गेवेदोक्तान्सर्वसम्मतान् ॥ २३ ॥ रत्नसारविकारंचनिर्मितंविश्व
कर्म्मणा ॥ वरंसिंहासनंरम्यंराधेपूजासुगृह्यताम् ॥ २४ ॥ अमूल्यरत्नखचितममूल्यंसूक्ष्ममेवच ॥ वन्हिशुद्धंनिर्म्मलंचवसनंदेविगृह्यताम्
॥ २५ ॥ सद्रत्नसारपात्रस्थंसर्वतीर्थोदकंशुभम् ॥ पादप्रक्षालनार्थंचराधेपाद्यंचगृह्यताम् ॥ २६ ॥ दक्षिणावर्त्तशंखस्थंसदूर्वापुष्पचन्द
नम् ॥ पूतंयुक्तंतीर्थतोयैःराधेऽर्घ्यंप्रतिगृह्यताम् ॥ २७ ॥ पार्थिवद्रव्यसंभूतमतीवसुरभीकृतम् ॥ मङ्गलार्हंपवित्रंचराधेगन्धंगृहाणमे ॥

---

१ सिद्धचारणैः इतिपाठः ।

॥ २८ ॥ श्रीखण्डचूर्णंसुस्निग्धंकस्तूरीकुङ्कुमान्वितम् ॥ सुगन्धयुक्तंदेवेशिगृह्यतामनुलेपनम् ॥ २९ ॥ वृक्षनिर्याससंयुक्तंपार्थिवद्रव्यसं
युतम् ॥ ज्वलदग्निशिखाभूतंधूपंदेविगृहाणमे ॥ ३० ॥ अन्धकारभयहरममूल्यरत्नमुज्वलम् ॥ रत्नप्रदीपंशोभाढ्यंगृहाणपरमेश्वरि ॥
॥ ३१ ॥ पारिजातप्रसूनंचगन्धचन्दनचर्चितम् ॥ अतीवशोभनंरम्यंगृह्यतांपरमेश्वरि ॥ ३२ ॥ सुगन्धामलकीचूर्णंसुस्निग्धंसुमनोहर
म् ॥ विष्णुतैलसमायुक्तंस्नानीयंदेविगृह्यताम् ॥ ३३ ॥ अमूल्यरत्ननिर्माणंकेयूरवलयादिकम् ॥ शंखंसुशोभनंराधेगृह्यतांभूषणंमम ॥
॥ ३४ ॥ कालदेशोद्भवंपक्कफलंचलड्डुकादिकम् ॥ परमान्नंचमिष्टान्नंनैवेद्यंदेविगृह्यताम् ॥ ३५ ताम्बूलंचवरंरम्यंकर्पूरादिसुवासितम्
॥ सर्वभोगाधिकंस्वादुताम्बूलंदेविगृह्यताम् ॥ ३६ ॥ अशनंरत्नपात्रस्थंसुस्वादुसुमनोहरम् ॥ मयानिवेदितंभक्त्यागृह्यतांपरमेश्वरि
॥ ३७ ॥ रत्नेन्द्रसारनिर्माणंवन्हिशुद्धांशुकान्वितम् ॥ पुष्पचन्दनचर्चाढ्यंपर्य्यङ्कंदेविगृह्यताम् ॥ ३८ ॥ एवंसंपूज्यदेवींतांदद्यात्पु
ष्पाञ्जलित्रयम् ॥ यत्नेनपूजयेद्देवींनायिकाष्टौव्रतेव्रती ॥ ३९ ॥ प्रागादिक्रमयोगेनदक्षिणावर्त्ततःप्रिये ॥ भक्त्यापंचोपचारेणसुप्रियाःप
रिचारिकाः ॥ ४० ॥ मालावतींपूर्वकोणेवन्हिकोणेचमाधवीम् ॥ दक्षिणेरत्नमालांचसुशीलांनैर्ऋतेसाति ॥ ४१ ॥ पश्चिमेचश
शिकलांपारिजातांचमारुते ॥ पद्मावतीमुत्तरेचऐशान्यांसुन्दरींतथा ॥ ४२ ॥ यूथिकामालतीपद्ममालांदद्याद्व्रतेव्रती ॥ परिहारंचकु
रुतेसामवेदोक्तमेवच ॥ ४६ ॥ त्वंदेवीजगतांमाताविष्णुमायासनातनी ॥ कृष्णप्राणाधिदेवीचकृष्णप्राणाधिकाशुभा ॥ ४४ ॥
कृष्णप्रेममयीशक्तिःकृष्णसौभाग्यरूपिणी ॥ कृष्णभक्तिप्रदेराधेनमस्तेमङ्गलप्रदे ॥ ४५ ॥ अद्यमेसफलंजन्मजीवनंसार्थकंमम ॥
पूजितासिमयासाचयाश्रीकृष्णेनपूजिता ॥ ४३ ॥ कृष्णवक्षसियाराधासर्वसौभाग्यसंयुता ॥ रासेरासेश्वरीरूपावृन्दावृन्दावनेवने ॥
॥ ४७ ॥ कृष्णप्रियाचगोलोकेतुलसीकाननेतुया ॥ चम्पावतीकृष्णसङ्गेक्रीडाचम्पककानने ॥ ४८ ॥ चन्द्रावली[1]चन्द्रवनेशतशृङ्गेसती
सति ॥ विरजादर्पहन्त्रीचविरजातटकानने ॥ ४९ ॥ पद्मावतीपद्मवनेकृष्णाकृष्णसरोवरे ॥ भद्राकुञ्जकुटीरेचकाम्याचकाम्यकेवने ॥

१ चन्द्रावतीतिपाठः ।

॥ ९० ॥ वैकुण्ठेचमहालक्ष्मीर्वाणीनारायणोरसि ॥ क्षीरोदसिन्धुकन्याचमर्त्येलक्ष्मीर्हरिप्रिया ॥ ९१ ॥ सर्वस्वर्गेस्वर्गलक्ष्मीर्देवदुःख
विनाशिनी ॥ सनातनीविष्णुमायादुर्गाशङ्करवक्षसि ॥ ९२ ॥ सावित्रीवेदमाताचकलयाब्रह्मवक्षसि ॥ कलयाधर्म्मपत्नीत्वंनरनारायण
प्रभुः ॥ ९३ ॥ कलयातुलसीत्वञ्चगङ्गाभुवनपावनी ॥ लोमकूपोद्भवागोप्यःकलांशारोहिणीरतिः ॥ ९४ ॥ कलाकलांशरूपाचशतरू
पाशचीदितिः ॥ अदितिर्देवमाताचत्वत्कलांशाहरिप्रिया ॥ ९५ ॥ देव्यश्चमुनिपत्न्यश्चत्वत्कलाकलयाशुभे ॥ कृष्णभक्तिंकृष्णदास्यं
देहिमेकृष्णपूजिते ॥ ९६ एवंकृत्वापरीहारंस्तुत्वाचकवचंपठेत् ॥ पुराकृतंस्तोत्रमेतद्भक्तिदास्यप्रदंशुभम् ॥ ९७ ॥ एवंनित्यंपूजये
द्योविष्णुतुल्यःसभारते ॥ जीवन्मुक्तश्चपूतश्चगोलोकंयातिनिश्चितम् ॥ ९८ ॥ कार्त्तिकीपूर्णिमायाञ्चराधांयःपूजयेच्छिवे ॥ एवं
क्रमेणप्रत्यब्दंराजसूयफलंलभेत् ॥ ९९ ॥ परमैश्वर्य्ययुक्तश्चइहलोकेसपुण्यवान् ॥ सर्वपापाद्विनिर्मुक्तोयात्यन्तेविष्णुमन्दिरम् ॥
॥ ६० ॥ आदावेवंक्रमेणैवरासेवृन्दावनेवने ॥ स्तुतासापूजिताराधाश्रीकृष्णेनपुरासति ॥ ६१ ॥ संपूजिताद्वितीयेचधात्राएवंक्रमेण
च ॥ त्वद्वरेणचसंप्राप्यविधातावेदमातरम् ॥ ६२ ॥ नारायणोमहालक्ष्मींप्रापसंपूज्यभारतीम् ॥ गङ्गाञ्चतुलसीञ्चैवपरांभुवनपावनीम्
॥ ६३ ॥ विष्णुःक्षीरोदशायीचप्रापसिन्धुसुतांतथा ॥ मृतायांदक्षकन्यायांमयाकृष्णाज्ञयापुरा ॥ ६४ ॥ त्वमेवदुर्गासम्प्राप्तापूजिता
पुष्करेचसा ॥ अदितिंकश्यपःप्रापचन्द्रःसंप्रापरोहिणीम् ॥ ६५ ॥ कामोरतिश्चसंप्रापधर्मोमूर्त्तिंपतिव्रताम् ॥ देवाश्चमुनयश्चैवयां
संपूज्यपतिव्रताम् ॥ ६६ ॥ संप्रापुर्यद्वरेणैवधर्मकामार्थमोक्षकम् ॥ एवंपूजाविधानञ्चकथितञ्चस्तवंशृणु ॥ ६७ ॥ श्रीमहेश्वरउवा
च ॥ एकदामानिनीराधाबभूवादर्शनाप्रभोः ॥ संसक्तस्यतुलस्यांचगोप्याञ्चतुलसीवने ॥ ६८ ॥ सासंहृत्यस्वमूर्त्तीश्चकलाःसर्वाश्चली
लया ॥ सर्वेबभूवुर्देवाश्चब्रह्मविष्णुशिवादयः ॥६९॥ भ्रष्टैश्वर्य्याश्चानिःश्रीकाभार्य्याहीनाह्युपद्रुताः ॥ तेचसर्वेसमालोच्यश्रीकृष्णंश
रणंययुः ॥ ७० ॥ तेषांस्तोत्रेणसन्तुष्टःस्नात्वासंपूज्यतांशुचिः ॥ तुष्टावपरमात्मासस्सर्वेषांराधिकांसतीम् ॥ ७१ ॥ श्रीकृष्णउवाच॥

१ नारायणेवनेइतिपाठः ।

एवमेवप्रियोऽहन्तेप्रमोदमेवतेमयि ॥ सुव्यक्तमद्यकापव्यवचनन्तेवरानने ॥ ७२ ॥ हेकृष्णत्वंममप्राणाजीवात्मेतिचसन्ततम् ॥ यद्
ब्रूहिनित्यंप्रेम्णाचसाप्रतन्तद्गतंद्रुतम् ॥ ७३ ॥ तस्मात्सर्वमलीकन्तेवचनंजगदम्बिके ॥ क्षुरधारश्चहृदयंस्त्रीजातीनांचसर्वतः ॥७४ ॥
अस्माकंवचनंसत्यंयद्ब्रवीमीतितद्ध्रुवम् ॥ पञ्चप्राणाधिदेवीत्वंराधाप्राणाधिकेतिमे ॥ ७५ ॥ शक्तोनरक्षितुंत्वांचयान्तिप्राणास्त्वया
विना ॥ विनाधिष्ठातृदेवीञ्चकोवाकुत्रचजीवति ॥ ७६ ॥ महाविष्णोश्चमातात्वंमूलप्रकृतिरीश्वरी ॥ सगुणात्वञ्चकलयानिर्गुणास्वय
मेवतु ॥ ७७ ॥ ज्योतीरूपानिराकाराभक्तानुग्रहविग्रहा ॥ भक्तानांरुचिवैचित्र्यान्नानामूर्त्तीश्चबिभ्रती ॥ ७८ ॥ महालक्ष्मीश्चवैकुण्ठे
भारतीचसतांप्रसूः ॥ पुण्यक्षेत्रेभारतेचसतीचपार्वतीतथा ॥ ७९ ॥ तुलसीपुण्यरूपाचगङ्गाभुवनपावनी ॥ ब्रह्मलोकेचसावित्रीकलया
त्वंवसुन्धरा ॥ ८० ॥ गोलोकेराधिकात्वञ्चसर्वगोपालकेश्वरी ॥ त्वयाविनाहंनिर्जीवोह्यशक्तःसर्वकर्म्मसु ॥ ८१ ॥ शिवःशक्तस्त्व
याशक्त्याशवाकारस्त्वयाविना ॥ वेदकर्त्तास्वयंब्रह्मावेदमात्रात्वयासह ॥ ८२ ॥ नारायणस्त्वयालक्ष्म्याजगत्पाताजगत्पतिः ॥ फ
लंददातियज्ञश्चत्वयादक्षिणयासह ॥ ८३ ॥ बिभर्त्तिसृष्टिंशेषश्चत्वांकृत्वामस्तकेभुवम् ॥ बिभर्त्तिगङ्गारूपांत्वांमूर्ध्निगङ्गाधरःशिवः ॥
॥ ८४ ॥ शक्तिमच्चजगत्सर्वंशवरूपंत्वयाविना ॥ वक्तासर्वस्त्वयावाण्यासूतोमूकस्त्वयाविना ॥ ८५ ॥ यथामृदाघटंकर्त्तुंकुलालःशक्ति
मान्सदा ॥ सृष्टिंस्रष्टुंतथाहञ्चप्रकृत्याचत्वयासह ॥ ८६ ॥ त्वयाविनाजडश्चाहंसर्वत्रचनशक्तिमान् ॥ सर्वशक्तिस्वरूपात्वंत्वमागच्छ
ममान्तिकम् ॥ ८७ ॥ वह्नौत्वंदाहिकाशक्तिर्नाग्निशक्तस्त्वयाविना ॥ शोभास्वरूपाचन्द्रेत्वंत्वांविनानससुन्दरः ॥ ८८ ॥ प्रभारूपा
हिसूर्य्येत्वंत्वांविनानसभानुमान् ॥ नकामःकामिनीबन्धुस्त्वयारत्याविनाप्रिये ॥ ८९ ॥ इत्येवंस्तवनंकृत्वातांसंप्रापजगत्प्रभुः ॥ दे
वाबभूवुःसश्रीकाःसाभार्य्याःशक्तिसंयुताः ॥ ९० ॥ सस्त्रीकश्चजगत्सर्वंबभूवशैलकन्यके ॥ गोपीपूर्णश्चगोलोकोबभूवतत्प्रसादतः॥९१॥
राजाजगामगोलोकमितिस्तुत्वाहरिप्रियाम् ॥ श्रीकृष्णेनकृतंस्तोत्रंराधायायःपठेन्नरः ॥ ९२ ॥ कृष्णभक्तिश्चतद्दास्यंसप्राप्नोतिनसंश
यः ॥ स्त्रीविच्छेदेयःशृणोतिमासमेकमिदंशुचिः ॥ ९३ ॥ अचिराल्लभतेभार्य्यांसुशीलांसुन्दरींसतीम् ॥ भार्य्याहीनोभाग्यहीनोवर्षमेकं

शृणोतियः ॥ ९४ ॥ अचिराल्लभतेभार्य्यांसुशीलांसुन्दरींसतीम् ॥ पुरामयाचत्वंप्राप्तास्तोत्रेणानेनपार्वति ॥ ९५ ॥ मृतायांदक्षकन्या
यामाज्ञयापरमात्मनः ॥स्तोत्रेणानेनसंप्राप्तासावित्रीब्रह्मणापुरा ॥ ९६॥ पुरादुर्वाससःशापान्निःश्रीकेदेवतागणे ॥स्तोत्रेणानेनदेवैस्तैःसं
प्राप्ताश्रीःसुदुर्लभा ॥ ९७ ॥ शृणोतिवर्षमेकञ्चपुत्रार्थीलभतेसुतम् ॥ महाव्याधिरोगमुक्तोभवेत्स्तोत्रप्रसादतः ॥ ९८ ॥ कार्त्तिकीपूर्णि
मायान्तुतांसंपूज्यपठेत्तुयः ॥ अचलांश्रियमाप्नोतिराजसूयफलंलभेत् ॥ ९९ ॥ नारीशृणोतिचेत्स्तोत्रंस्वामिसौभाग्यतांलभेत् ॥
भक्त्याश्शृणोतियःस्तोत्रंबन्धनान्मुच्यतेध्रुवम् ॥ १०० ॥ नित्यंपठतियोभक्त्याराधांसंपूज्यभक्तितः ॥ सम्प्रयातिचगोलोकंनिर्मुक्तोभ
वबन्धनात् ॥ १०१ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डेहरगौरीसंवादेश्रीराधिकोपाख्यानेराधापूजास्तो
त्रंनामपञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ ॥छ॥ ॥छ॥ ॥छ॥
श्रीपार्वत्युवाच ॥ पूजाविधानंस्तोत्रञ्चश्रुतमत्यद्भुतंमया ॥ अधुनाकवचंब्रूहिश्रोष्यामित्वत्प्रसादतः ॥ १ ॥ श्रीमहेश्वरउवाच ॥
शृणुवक्ष्यामिहेदुर्गेकवचंपरमाद्भुतम् ॥ पुरामह्यंनिगदितंगोलोकेपरमात्मना ॥ २ ॥ अतिगुह्यंपरंतत्त्वंसर्वमन्त्रौघविग्रहम् ॥ यद्धृत्वापठ
नाद्ब्रह्मासंप्रापवेदमातरम् ॥ ३ ॥ यद्धृत्वाहंतवस्वामीसर्वमातुःसुरेश्वरि ॥ नारायणश्चयद्धृत्वामहालक्ष्मीमवापसः ॥ ४ ॥ यद्धृत्वापर
मात्माचनिर्गुणःप्रकृतेःपरः ॥ बभूवशक्तिमान्कृष्णःसृष्टिंस्रष्टुंपुराविभुः ॥ ५ ॥ विष्णुःपाताचयद्धृत्वासंप्रापसिन्धुकन्यकाम् ॥ शेषोबिभ
र्त्तिब्रह्माण्डंमूर्ध्निसर्षपवद्यतः ॥ ६ ॥ लोमकूपेषुप्रत्येकंब्रह्माण्डानिमहान्विराट् ॥ बिभर्त्तिधारणाद्यस्यसर्वाधारोबभूवसः ॥ ७ ॥ यद्धा
रणाच्चपठनाद्धर्म्मःसाक्षीचसर्वतः ॥ यद्धारणात्कुबेरश्चधनाध्यक्षश्चभारते ॥ ८ ॥ इन्द्रःसुराणामीशश्चपठनाद्धारणाद्यतः ॥ नृपाणांम
नुरीशश्चपठनाद्धारणाद्यतः ॥ ९ ॥ श्रीमांश्चन्द्रश्चयद्धृत्वाराजसूयंचकारसः ॥ स्वयंसूर्य्यस्त्रिलोकेशःपठनाद्धारणाद्यतः ॥ १० ॥ य
द्धृत्वापठनादग्निर्जगत्पूतंकरोतिच ॥ यद्धृत्वावातिवातोऽयंपुनातिभुवनत्रयम् ॥ ११ ॥ यद्धृत्वाचस्वतन्त्रोहिमृत्युश्चरतिजन्तुषु ॥
त्रिःसप्तकृत्वानिःक्षत्रांचकारचवसुन्धराम् ॥ १२ ॥ जामदग्न्यश्चरामश्चपठनाद्धारणाद्यतः ॥ पपौसमुद्रंयद्धृत्वापठनात्कुम्भसम्भवः ॥

॥ १३ ॥ सनत्कुमारोभगवान्यद्धृत्वाज्ञानिनांगुरुः ॥ जीवन्मुक्तौचसिद्धौचनरनारायणावृषी ॥ १४ ॥ यद्धृत्वापठनात्सिद्धोवसिष्ठोब्रह्मपु
त्रकः ॥ सिद्धेशःकपिलोयस्माद्यस्माद्दक्षःप्रजापतिः ॥ १५ ॥ यस्माद्भृगुश्वमांद्वेष्टिकूर्म्मःशेषंबिभर्त्तिच ॥ सर्वाधारोयतोवायुर्वरुणःप
वनोयतः ॥ १६ ॥ ईशानोदिक्पतिश्चैवयमःशास्तायतःशिवे ॥ कालःकालाग्निरुद्रश्वसंहर्त्ताजगतांयतः ॥ १७ ॥ यद्धृत्वागौतमःसि
द्धःकश्यपश्चप्रजापतिः ॥ वसुदेवसुतांप्रापचैकांशेनतुतत्कलाम् ॥ १८ ॥ पुरास्वजायाविच्छेदेदुर्वासामुनिपुङ्गवः ॥ संप्रापरामःसीताञ्च
रावणेनहृतांपुरा ॥ १९ ॥ पुरानलश्चसंप्रापदमयन्तींयतःसतीम् ॥ शंखचूडोमहावीरोदैत्यानामीश्वरोयतः ॥ २० ॥ वृषोवहतिमांदुर्गे
यतोहिगरुडोहरिम् ॥ एवंसंप्रापसंसिद्धिंसिद्धाश्चमुनयःपुरा ॥ २१ ॥ यद्धृत्वाचमहालक्ष्मीःप्रदात्रीसर्वसम्पदाम् ॥ सरस्वतीसतांश्रेष्ठा
यतःक्रीडावतीरतिः ॥ २२ ॥ सावित्रीवेदमाताचयतःसिद्धिमवाप्नुयात् ॥ सिन्धुकन्यामर्त्यलक्ष्मीर्यतोविष्णुमवापसा ॥ २३ ॥ यद्धृत्वा
तुलसीपूतागङ्गाभुवनपावनी ॥ यद्धृत्वासर्वसस्याढ्यासर्वाधारावसुन्धरा ॥ २४ ॥ यद्धृत्वामनसादेवीसिद्धाचविश्वपूजिता ॥ यद्धृत्वादे
वमाताचविष्णुंपुत्रमवापसा ॥ २५ ॥ पतिव्रताचयद्धृत्वालोपामुद्राप्यरुन्धती ॥ लेभेचकपिलंपुत्रंदेवहूतीयतःसती ॥ २६ ॥ प्रियव्र
तोत्तानपादौसुतौप्रापचतत्प्रसूः ॥ त्वन्माताचापिसंप्रापत्वांदेवींगिरिजांयतः ॥ २७ ॥ एवंसर्वेसिद्धगणाःसर्वैश्वर्य्यमवाप्नुयुः ॥ श्रीजग
न्मङ्गलस्यास्यकवचस्यप्रजापतिः ॥ २८ ॥ ऋषिश्छन्दोऽस्यगायत्रीदेवीरासेश्वरीस्वयम्[2] ॥ श्रीकृष्णभक्तिसंप्राप्तौविनियोगःप्रकीर्त्ति
तः ॥ २९ ॥ शिष्यायकृष्णभक्तायब्राह्मणायप्रकाशयेत् ॥ शठायपरशिष्यायदत्त्वामृत्युमवाप्नुयात् ॥ ३० ॥ राज्यंदेयंशिरोदेयंनदेयंकव
चंप्रिये ॥ कण्ठेधृतमिदंभक्त्याकृष्णेनपरमात्मना ॥ ३१ ॥ मयादृष्टश्चगोलोकेब्रह्मणाविष्णुनापुरा ॥ ओंराधेतिचतुर्थ्यन्तंवह्निजायान्त
मेवच ॥ ३२ ॥ कृष्णेनोपासितोमन्त्रःकल्पवृक्षःशिरोऽवतु ॥ ओंह्रींश्रींराधिकांङेन्तंवन्हिजायान्तमेवच ॥ ३३ ॥ कपालंनेत्रयुग्म
ञ्चश्रोत्रयुग्मंसदाऽवतु ॥ ओंरांह्रींश्रींराधिकेतिङेन्तंवन्हिजायान्तमेवच ॥ ३४ ॥ मस्तकंकेशसंघांश्चमन्त्रराजःसदावतु ॥ ओंरांराधे

१ सुराःइतिपाठः । २ देवोरासेश्वरःइतिपाठः ।

तिचतुर्थ्यन्तंवन्हिजायान्तमेवच ॥ ३५ ॥ सर्वसिद्धिप्रदःपातुकपोलंनासिकांमुखम् ॥ क्लींश्रींकृष्णप्रियाङेन्तंकण्ठंपातुनमोऽन्तकम्॥ ॥ ३६ ॥ ओंरांरासेश्वरीङेन्तंस्कन्धंपातुनमोऽन्तकम् ॥ ओंरांरासविलासिन्यैस्वाहापृष्ठंसदावतु ॥ ३७॥ वृन्दावनविलासिन्यैस्वाहा वक्षःसदावतु ॥ तुलसीवनवासिन्यैस्वाहापातुनितम्बकम् ॥ ३८ ॥ कृष्णप्राणाधिकाङेन्तंस्वाहान्तंप्रणवादिकम् ॥ पादयुग्मश्चसर्वाङ्गं सन्ततंपातुसर्वतः ॥ ३९ ॥ राधारक्षतुप्राच्यांचवन्हौकृष्णप्रियावतु ॥ दक्षेरासेश्वरीपातुगोपीशानैर्ऋतेऽवतु ॥ ४० ॥ पश्चिमेनिर्गुणा पातुवायव्येकृष्णपूजिता ॥ उत्तरेसन्ततंपातुमूलप्रकृतिरीश्वरी ॥ ४१ ॥ सर्वेश्वरीसदैशान्यांपातुमांसर्वपूजिता ॥ जलेस्थलेचान्तरिक्षे स्वप्नेजागरणेतथा ॥ ४२ ॥ महाविष्णोश्चजननीसर्वतःपातुसन्ततम् ॥ कवचंकथितंदुर्गेश्रीजगन्मङ्गलंपरम् ॥ ४३ ॥ यस्मैकस्मैनदा तव्यंगूढाद्गूढतरंपरम् ॥ तवस्नेहान्मयाख्यातंप्रवक्तव्यंनकस्यचित् ॥ ४४ ॥ गुरुमभ्यर्च्यविधिवद्वस्त्रालङ्कारचन्दनैः ॥ कण्ठेवादक्षिणे बाहौधृत्वाविष्णुसमोभवेत् ॥ ४५ ॥ शतलक्षजपेनैवसिद्धञ्चकवचंभवेत् ॥ यदिस्यात्सिद्धकवचोनदग्धोवन्हिनाभवेत् ॥ ४६ ॥ एतस्मा त्कवचाद्दुर्गेराजादुर्य्योधनःपुरा ॥ विशारदोजलस्तम्भेवन्हिस्तम्भेचनिश्चितम् ॥ ४७ ॥ मयासनत्कुमारायपुरादत्तश्चपुष्करे ॥ सू र्य्यपर्वणिमेरौचससान्दीपनयेददौ ॥ ४८ ॥ बलायतेनदत्तंचददौदुर्य्योधनायसः ॥ कवचस्यप्रसादेनजीवन्मुक्तोभवेन्नरः ॥ ४९ ॥ नि त्यंपठतिभक्त्येदंतन्मन्त्रोपासकश्चयः ॥ विष्णुतुल्योभवेन्नित्यंराजसूयफलंलभेत् ॥ ५० ॥ स्नानेनसर्वतीर्थानांसर्वदानेनयत्फलम् ॥ सर्व व्रतोपवासेचपृथिव्याश्चप्रदक्षिणे ॥ ५१ ॥ सर्वयज्ञेषुदीक्षायांनित्यञ्चसत्यरक्षणे ॥ नित्यंश्रीकृष्णसेवायांकृष्णनैवेद्यभक्षणे ॥ ५२ ॥ पाठे चतुर्णांवेदानांयत्फलञ्चलभेन्नरः ॥ तत्फलंलभतेनूनंपठनात्कवचस्यच ॥ ५३ ॥ राजद्वारेश्मशानेचसिंहव्याघ्रान्वितेवने ॥ दावाग्नौसंक टेचैवदस्युचौरान्वितेभये ॥ ५४ ॥ कारागारेविपद्ग्रस्तेघोरेचदृढबन्धने ॥ व्याधियुक्तोभवेन्मुक्ताधारणात्कवचस्यच ॥ ५५ ॥ इत्येत त्कथितंदुर्गेतवैवेदंमहेश्वरि ॥ त्वमेवसर्वरूपामांमायापृच्छसिमायया ॥ ५६ ॥ श्रीनारायणउवाच ॥ इत्युक्त्वाराधिकाख्यानंस्मारंस्मार

१ वृन्दावनविलासिन्यैस्वाहापातुनितंबकं । तुलसीवनवासिन्यैस्वाहाबाहुंसदावतु इतिपाठः । २ रिपुग्रस्तेतिपाठः ।

श्चमाधवम् ॥ पुलकाङ्कितसर्वाङ्गःसाश्रुनेत्रोबभूवसः ॥ ९७ ॥ नकृष्णसदृशोदेवोनगङ्गासदृशीसरित् ॥ नपुष्करात्परंतीर्थंनाश्रमोब्राह्म
णात्परः॥९८॥परमाणुपरंसूक्ष्मंमहाविष्णोःपरोमहान् ।नभःपरञ्चविस्तीर्णंयथानास्त्येवनारद ॥९९॥यथानवैष्णवाज्ज्ञानीयोगीन्द्रःशङ्क
रात्परः ॥कामक्रोधलोभमोहजितास्तेनैवनारद ॥६० ॥ स्वप्नेजागरणेशश्वत्कृष्णध्यानरतःशिवः ॥ यथाकृष्णस्तथाशम्भुर्नभेदोमाधवे
शयोः॥६१॥ यथाशम्भुर्वैष्णवेषुयथादेवेषुमाधवः ॥ तथेदंकवचंवत्सकवचेषुप्रशस्तकम् ॥६२॥ शिरितिमङ्गलार्थञ्चवकारोदातृवाचकः ॥
मङ्गलानांप्रदातायःसशिवःपरिकीर्त्तितः ॥ ६३ ॥ नराणांसन्ततंविश्वेशंकल्याणंकरोतियः ॥ कल्याणंमोक्षवचनंसएवशङ्करःस्मृतः ॥
॥ ६४ ॥ ब्रह्मादीनांसुराणाञ्चमुनीनांवेदवादिनाम् ॥ तेषांचमहतांदेवोमहादेवःप्रकीर्तितः ॥ ६५ ॥ महतीपूजिताविश्वेमूलप्रकृतिरीश्व
री ॥ तस्याःदेवःपूजितश्चमहादेवःसचस्मृतः ॥ ६६ ॥ विश्वस्थानाञ्चसर्वेषांमहतामीश्वरःस्वयम् ॥ महेस्वरञ्चतेनेमंप्रवदन्तिमनीषिणः
॥ ६७ ॥ हेब्रह्मपुत्रधन्योऽसियद्गुरुश्चमहेश्वरः ॥ श्रीकृष्णभक्तिदातायोभवान्पृच्छतिमाञ्चकिम् ॥ ६८ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुरा
णेनारायणनारदसंवादेप्रकृतिखण्डेराधिकोपाख्यानंनामषट्पञ्चाशत्तमोऽध्यायः॥ ९६ ॥ ॥ छ ॥ ॥ छ ॥
॥ नारदउवाच ॥ सर्वाख्यानंश्रुतंब्रह्मन्नतीवपरमाद्भुतम् ॥ अधुनाश्रोतुमिच्छामिदुर्गोपाख्यानमुत्तमम् ॥ १॥दुर्गानारायणीशानाविष्णु
मायाशिवासती ॥ नित्यासत्याभगवतीशर्वाणीसर्वमङ्गला ॥ २ ॥ अम्बिकावैष्णवीगौरीपार्वतीचसनातनी ॥ नामानिकौथमोक्तानिसर्वे
षांशुभदानिच ॥ ३ ॥ अर्थंषोडशनाम्नांचसर्वेषामीप्सितंवरम् ॥ ब्रूहिवेदविदांश्रेष्ठवेदोक्तंसर्वसम्मतम् ॥ ४ ॥ केनवापूजितासादौद्विती
येकेनवापुरा ॥ तृतीयेवाचतुर्थेवाकेनसर्वत्रपूजिता ॥ ५॥ नारायणउवाच ॥ अर्थंषोडशनाम्नाञ्चविष्णुर्वेदेचकारसः ॥ पुनःपृच्छसिज्ञा
त्वात्वंकथयामियथागमम् ॥ ६ ॥ दुर्गौ दैत्येमहाविघ्नेभवबन्धेचकर्म्मणि ॥शोकेदुःखेचनरकेयमदण्डेचजन्मनि ॥ ७ ॥ महाभयेऽतिरो
गेचाप्याशब्दोहन्तृवाचकः ॥ एतान्हन्त्येवयादेवीसादुर्गापरिकीर्त्तिता ॥ ८ ॥ यशसातेजसारूपैर्नारायणसमागुणैः ॥ शक्तिर्नारायणस्ये

---

१ वेगेचेतिपाठः ।

यंतेननारायणीस्मृता ॥ ९ ॥ ईशानःसर्वसिद्धचर्थेचाशब्दोदातृवाचकः ॥ सर्वसिद्धिप्रदात्रीयासापीशानाप्रकीर्त्तिता ॥१०॥ सृष्टामायापु
रासृष्टौविष्णुनापरमात्मना॥मोहितंमाययाविश्वंविष्णुमायाप्रकीर्तिता॥११॥शिवेकल्याणरूपाचशिवदाचशिवप्रिया ॥प्रियेदातरिचाश
ब्दोशिवातेनप्रकीर्तिता ॥ १२ ॥ सद्बुद्ध्यधिष्ठातृदेवीविद्यमानायुगेयुगे ॥ पतिव्रतासुशीलाचसासतीपरिकीर्तिता ॥ १३ ॥ यथानित्यो
हिभगवान्नित्याभगवतीतथा ॥ स्वमाययातिरोभूतातत्रेशेप्राकृतेलये ॥ १४ ॥ आब्रह्मस्तम्बपर्य्यन्तंसर्वंमिथ्यैवकृत्रिमम् ॥ दुर्गासत्य
स्वरूपासाप्रकृतिर्भगवान्यथा ॥ १५ ॥ सिद्धैश्वर्य्यादिकंसर्वंयस्यामस्तियुगेयुगे ॥ सिद्धादिकेभगोज्ञेयस्तेनभगवतीस्मृता ॥ १६ ॥ स
र्वान्मोक्षंप्रापयतिजन्ममृत्युजरादिकम् ॥ चराचरांश्चविश्वस्थान्शर्वाणीतिनकीर्त्तिता ॥ १७ ॥ मङ्गलंमोक्षवचनंचाशब्दोदातृवाचकः ॥
सर्वान्मोक्षान्याददातिसाएवसर्वमङ्गला॥१८॥हर्षेसम्पदिकल्याणेमङ्गलंपरिकीर्तितम्॥तान्ददातियादेवीसाएवसर्वमङ्गला ॥१९॥ अम्बे
तिमातृवचनोवन्दनेपूजनेसदा॥पूजितावन्दितामाताजगतांतेनसाम्बिका॥२०॥विष्णुभक्ताविष्णुरूपाविष्णोःशक्तिस्वरूपिणी ॥ सृष्टौच
विष्णुनासृष्टावैष्णवीतेनकीर्तिता॥२१॥गौरःपीतेचनिर्लिप्तेपरेब्रह्मणिनिर्म्मले॥तस्यात्मनःशक्तिरियंगौरीतेनप्रकीर्त्तिता॥२२॥गुरुःशम्भु
श्चसर्वेषांतस्यशक्तिःप्रियासती॥गुरुःकृष्णश्चतन्मायागौरीतेनप्रकीर्त्तिता ॥ २३ ॥ तिथिभेदेपर्वभेदेकल्पभेदेप्रभेदतः ॥ ख्यातौतेषुचवि
ख्यातापार्वतीतेनकीर्तिता ॥२४॥महोत्सवविशेषेचपर्वन्नितिप्रकीर्तिता॥तस्याधिदेवीयासाचपार्वतपरिकीर्त्तिता॥२५॥पर्वतस्यसुतादे
वीसाविर्भूताचपर्वते ॥ पर्वताधिष्ठातृदेवीपार्वतीतेनकीर्त्तिता॥२६॥सर्वकालेसनाप्रोक्तोविद्यमानेतनीतिच ॥ सर्वत्रसर्वकालेचविद्यमाना
सनातनी ॥ २७ ॥ अर्थःषोडशनाम्नाञ्चकीर्त्तितश्चमहामुने ॥ यथागमञ्चवेदोक्तोपाख्यानञ्चनिशामय ॥ २८ ॥ प्रथमेपूजितासाचकृष्णे
नपरमात्मना ॥ वृन्दावनेचसृष्टयादौगोलोकेरासमण्डले ॥ २९ ॥ मधुकैटभभीतेचब्रह्मणासाद्वितयितः॥त्रिपुरप्रेरितेनैवतृतीयेत्रिपुरारि
णा ॥३०॥ भ्रष्टश्रियामहेन्द्रेणशापाद्दुर्वाससःपुरा ॥ चतुर्थेपूजितादेवीभक्त्याभगवतीसती ॥३१॥ तदामुनीन्द्रैःसिद्धेन्द्रैर्देवैश्चमुनिपुङ्ग

१ सर्वभेदेइतिपाठः ।

वैः ॥ पूजितासर्वविश्वेषुबभूवसर्वतःसदा ॥३२॥ तेजःसुसर्वदेवानांसाविर्भूतापुरामुने ॥ सर्वदेवाददुस्तस्यैशस्त्राणिभूषणानिच ॥ ३३॥
दुर्गादयश्चदैत्याश्चनिहतादुर्गयातया॥दत्तंस्वराज्यंदेवेभ्योवरञ्चयदभीप्सितम्॥३४॥कल्पान्तरेपूजितासासुरथेनमहात्मना ॥ राज्ञामेध
सशिष्येणमृन्मय्याञ्चसरित्तटे ॥ ३५ ॥ मेषादिभिश्चमहिषैःकृष्णसारैश्चमण्डकैः ॥ छागैरीक्षुककुष्माण्डैःपक्षिभिर्बलिभिर्मुने ॥ ३६ ॥
वेदोक्तानिचदत्त्वैवमुपचाराणिषोडश ॥ ध्यात्वाचकवचंधृत्वासंपूज्यचविधानतः ॥ ३७ ॥ राजाकृत्वापरीहारंवरंप्रापयथेप्सितम् ॥ मु
क्तिंसंप्रापवैश्यश्चसंपूज्यचसरित्तटे ॥ ३८ ॥ तुष्टावराजावैश्यश्चसाश्रुनेत्रपुटाञ्जलिः॥विससर्जमृन्मयींतांगभीरेनिर्मलेजले ॥ ३९ ॥ मृन्म
यींतादृशींदृष्ट्वाजलधौतांनराधिपः॥ रुरोदचतदावैश्यस्ततःस्थानान्तरंययौ ॥४०॥ त्यक्त्वादेहञ्चवैश्यश्चपुष्करेदुष्करंतपः ॥४१॥कृत्वा
जगामगोलोकंदुर्गादेवीवरेणसः॥राजाययौस्वराज्यञ्चपूज्योनिष्कण्टकंबली॥४२॥ भोगञ्चबुभुजेभूपःषष्टिवर्षसहस्रकम् ॥भार्य्यांस्वराज्यं
संन्यस्यपुत्रेचकालयोगतः॥४३॥मनुर्बभूवसावर्णिस्तप्त्वाचपुष्करेतपः ॥ इत्येवंकथितंवत्ससमासेनयथागमं॥४४॥दुर्गाख्यानंमुनिश्रेष्ठकिं
भूयःश्रोतुमिच्छसि॥४५॥इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डेदुर्गोपाख्यानंनामसप्तपञ्चाशत्तमोऽध्यायः ॥५७॥
॥ नारदउवाच ॥ कस्यवंशोद्भवोराजासुरथोधर्म्मिणांवरः ॥ कथंसंप्रापज्ञानञ्चमेधसाज्ज्ञानिनांवरात् ॥ १ ॥ कस्यवंशोद्भवोब्रह्मन्मे
धसोमुनिसत्तमः ॥ बभूवकुत्रसंवादोनृपस्यमुनिनासह ॥ २ ॥ बभूवकुत्रसाक्षाद्वाभगवन्नृपवैश्ययोः ॥ व्यासेनश्रोतुमिच्छामिवदवेद
विदांवर ॥ ३ ॥ नारायणउवाच ॥ अत्रिश्चब्रह्मणःपुत्रस्तस्यपुत्रोनिशाकरः ॥ सचकृत्वाराजसूयंद्विजराजोबभूवह ॥ ४ ॥ गुरुपत्न्यां
चतारायांतस्याभूच्चबुधःसुतः ॥ बुधपुत्रस्तुचैत्रश्चतत्पुत्रःसुरथःस्मृतः ॥ ५ ॥ नारदउवाच ॥ गुरुपत्न्याञ्चतारायांबभूवतत्सुतःकथम्
॥ अहोव्यतिक्रमंब्रूहिवेदस्यचमहामुने ॥ ६ ॥ नारायणउवाच ॥ सम्पन्मत्तोमहाकामीददर्शजाह्नवीतटे ॥ तारांसुरगुरोःपत्नींधर्म्मिष्ठा
ञ्चपतिव्रताम् ॥ ७ ॥ सुस्नातांसुन्दरींरम्यांपीनोन्नतपयोधराम् ॥ सुश्रोणींसुनितम्बांचमध्यक्षीणांमनोहराम् ॥ ८ ॥ सुदतींकोमला

१ मुनीशइतिपाठः ।

श्रीश्चनवयौवनसंयुताम् ॥ सूक्ष्मवस्त्रपरीधानांरत्नभूषणभूषिताम् ॥ ९ ॥ कस्तूरीबिन्दुनासार्द्धमधश्चन्दनबिन्दुना ॥ सिन्दूरबिन्दुना
चारुभालमध्यस्थलोज्ज्वलाम् ॥ १०॥ वायुनाधोवस्त्रहीनांसकामांरक्तलोचनाम् ॥ शरत्पार्वणचन्द्रास्यांपक्कबिम्बाधरांवराम् ॥११॥
सस्मितांनम्रवक्त्रांचलज्जयाचन्द्रदर्शनात् ॥ गच्छन्तींस्वगृहंहर्षाद्गजेन्द्रमन्दगामिनीम् ॥ १२ ॥ तांदृष्ट्वामन्मथाक्रान्तःचन्द्रोलज्जां
जहौमुने ॥ पुलकाङ्कितसर्वांगःसकामस्तामुवाचसः ॥ १३ ॥ चन्द्रउवाच ॥ योषिच्छ्रेष्ठेक्षणंतिष्ठवरिष्ठेरसिकासुच ॥ सुविदग्धेविद
ग्धानांमनोहरसिसन्ततम् ॥ १४ ॥ निषेव्यप्रकृतिंजन्मसहस्रंकामसागरे ॥ तपःफलेनत्वांप्रापबृहच्छ्रोणींबृहस्पतिः ॥ १५ ॥ अहो
तपस्विनासार्द्धमविदग्धेनवेधसा ॥ योजितात्वंरसवतीशश्वत्कामातुरावरा ॥ १६ ॥ किंवासुखञ्चविज्ञातमविज्ञेषुसमागमे ॥ विदग्धा
याविदग्धेनसङ्गमःसुखसागरः ॥ १७॥ कामेनकामिनीत्वञ्चदग्धासिव्यर्थमीश्वरि ॥ कर्मणावात्मदोषाद्वाकोजानातिमनःस्त्रियाः॥१८॥
दिनेदिनेवृथायातिदुर्लभंनवयौवनम् ॥ नवीनयौवनस्थायावृद्धेनस्वामिनातव ॥ १९ ॥ शश्वत्तपस्यायुक्तश्चकृष्णमात्मानमीप्सितम्
॥ स्वप्नेजागरणेवापिध्यायतेचबृहस्पतिः ॥२० ॥ सर्वकामरसज्ञात्वंनिष्कामंकाममीप्सितम् ॥ कामुकीध्यायतेशश्वद्यूनाशृङ्गारमा
त्मनि ॥ २१ ॥ अन्यश्चत्वन्मनःकामोभिन्नंत्वद्भर्तुरीप्सितम् ॥ काप्रीतिःसङ्गमेकान्तेद्वयोर्विषयभिन्नयोः ॥ २२ ॥ वासन्तीपुष्पत
ल्पेचगन्धचन्दनचर्चिते ॥ वसन्तेमांगृहीत्वाचमोदस्वमाधवीवने ॥ २३ ॥ निर्जनेचन्दनवनेसुगन्धिपुष्पचर्चिते ॥ भवतीयुवतीभाग्य
वतीतत्रैवमोदताम् ॥ २४ ॥ चन्दनेचम्पकवनेशीतचंपकवायुना ॥ रम्येचम्पकतल्पेचक्रीडांकुरुमयासह ॥ २५ ॥ इत्युक्त्वामदनो
न्मत्तोमदनाधिकसुन्दरः ॥ पपातचरणेदेव्यामन्दोमन्दाकिनीतटे ॥ २६ ॥ निरुद्धमार्गाचन्द्रेणशुष्ककण्ठौष्ठतालुका ॥ अभीतोवाचको
पेनरक्तपङ्कजलोचना ॥ २७ ॥ तारोवाच ॥ धिक्त्वांचन्द्रतृणंमन्येपरस्त्रीलम्पटंशठम् ॥ अत्रेरभाग्यात्त्वंपुत्रोव्यर्थन्तेजन्मजीवनम्
॥ २८ ॥ अरेकृत्वाराजसूयमात्मानंमन्यसेबली ॥ बभूवपुण्यंतेव्यर्थंविप्रस्त्रीषुचयन्मनः ॥ २९ ॥ यस्यचित्तंपरस्त्रीषुसोऽशुचिःसर्वकर्मसु
॥ नकर्मफलभाक्पापीनिन्द्योविश्वेषुसर्वतः ॥ ३० ॥ हंसिचेन्मेसतीत्वञ्चयक्ष्मग्रस्तोभविष्यसि ॥ अत्युच्छ्रितोनिपतनंप्राप्नोतीतिश्रु

तौश्रुतम् ॥ ३१ ॥ दुष्टानांदर्पहाकृष्णोदर्पन्तेनिहनिष्यति ॥ त्यजमांमातरंवत्सयदितेशंभविष्यति ॥ ३२ ॥ इत्युक्त्वातारकासाध्वीरु
रोदचमुहुर्मुहुः ॥ चकारसाक्षिणंधर्मंसूर्य्यंवायुंहुताशनम् ॥ ३३ ॥ ब्रह्माणंपरमात्मानमाकाशंपवनंधराम् ॥ दिनंरात्रिश्चसन्ध्याश्चसर्वं
सुरगणंमुने ॥ ३४ ॥ तारकावचनंश्रुत्वानभीतःसचुकोपह ॥ करेधृत्वारथेतूर्णंस्थापयामाससुन्दरीम् ॥ ३९ ॥ रथञ्चचालयामासमनोया
यीमनोहरम् ॥ मनोहरांगृहीत्वातांसचरेमेमनोहरम् ॥ ३६ ॥ विस्यन्दकेसुरवनेचन्दनेपुष्पभद्रके ॥ पुष्करेचनदीतीरेपुष्पितेपुष्पकान
ने ॥ ३७ ॥ सुगन्धिपुष्पतल्पेचपुष्पचन्दनवायुना ॥ निर्जनेमलयद्रोण्यांस्निग्धचन्दनचर्चिते ॥ ३८ ॥ शैलेशैलेनदेनद्यांशृङ्गारंकुर्वतो
स्तयोः ॥ गतंवर्षशतंहर्षान्मुहूर्त्तमिवनारद ॥ ३९ ॥ बभूवशरणापन्नोभीतोदैत्येषुचन्द्रमाः ॥ तेजस्विनितथाशुक्रेतेषाञ्चबलिनांगुरौ ॥
॥ ४० ॥ अभयञ्चददौतस्मैकृपयाभृगुनन्दनः ॥ गुरुंजहासदेवानांसुविपक्षंबृहस्पतिम् ॥ ४१ ॥ सभायांजहसुर्हृष्टाबलिनोदितिनन्दनाः
॥ अभयञ्चददुस्तस्मैभीतायचकलङ्किने ॥ ४२ ॥ सतीसतीत्वध्वंसेनपापेनचन्द्रमण्डले ॥ बभूवशशरूपञ्चकलङ्कंनिर्मलेमलम् ॥ ४३ ॥
उवाचतंमहाभीतंशुक्रोवेदविदांवरः ॥ हितंतथ्यंवेदयुक्तंपरिणामसुखावहम् ॥ ४४ ॥ शुक्रउवाच ॥ त्वमहोब्रह्मणःपौत्रोऽप्यत्रेर्भगवतः
सुतः ॥ दुर्नीतंकर्मतेपुत्रनीचवन्नयशस्करम् ॥ ४९ ॥ राजसूयपुण्यफलेनिर्मलेकीर्त्तिमण्डले ॥ सुधाराशौसुराबिन्दुरूपमङ्कमुपार्जितम् ॥
॥ ४६ ॥ त्यजदेवगुरोःपत्नींप्रसूमिवमहासतीम् ॥ धर्मिष्ठस्यवरिष्ठस्यब्राह्मणानांबृहस्पतेः ॥ ४७ ॥ शम्भोःसुराणामीशस्यगुरुपुत्रस्यब्रह्म
णः ॥ पौत्रस्याङ्गिरसःशश्वज्ज्वलतोब्रह्मतेजसा ॥ ४८ ॥ शत्रोरपिगुणावाच्यादोषावाच्यागुरोरपि ॥ इतिसद्वंशजातानांस्वभावश्चसता
मपि ॥ ४९ ॥ सशत्रुर्मेसुरगुरुःपरोविश्वेनिशाकर ॥ तथापिसहजाख्यानंवर्णितंधर्मसंसदि ॥ यत्रलोकाश्चधर्मिष्ठास्तत्रधर्मःसनातनः
॥ ९० ॥ यतोधर्मस्ततःकृष्णोयतःकृष्णस्ततोजयः ॥ गौरेकंपञ्चचव्याघ्रीसिंहीसप्तप्रसूयते ॥ ९१ ॥ हिंसकाःप्रलयंयान्तिधर्मोरक्षति
धार्मिकम् ॥ देवाश्चगुरवोविप्राःशक्तायद्यपिरक्षितुम् ॥ ९२ ॥ तथापिनहिरक्षन्तिधर्मघ्नंपापिनंजनम् ॥ कुलटाविप्रपत्नीनांगमनेसुरवि
प्रयोः ॥ ९३ ॥ ब्रह्महत्याषोडशांशपातकंचभवेद्ध्रुवम् ॥ तासामुपस्थितानांचगमनेतच्चतुर्थकम् ॥ ९४ ॥ विप्रपत्नीसतीनांचगमनेनब

लेनचेत् ॥ ब्रह्महत्याशतंपापंभवेदेवश्रुतौश्रुतम्॥ ९५॥ धर्म्मंचरमहाभागब्राह्मणींत्यजसाम्प्रतम् ॥ कृत्वानुतापंपापाच्चनिवृत्तिस्तुमहाफ
ला ॥ ९६ ॥ उपायेनचतेपापंदूरीभूतंकरोम्यहम् ॥ शरणागतस्यभीतस्यमयिदेवस्यधर्मतः ॥ शस्त्रहीनंचभीतंचदीनंचशरणार्थिनम् ॥
योनरक्षत्यधर्मिष्ठःकुम्भीपाकेवसेद्ध्रुवम् ॥ ९८ ॥ राजसूयशतानांचराक्षितालभतेफलम् ॥ परमैश्वर्य्ययुक्तश्चधर्मेणसभवेदिह ॥ ९९ ॥
इत्युक्त्वाचदैत्यगुरुःस्वर्गेमन्दाकिनीतटे ॥ स्नात्वातंस्नापयामासविष्णुपूजांचकारसः ॥ ६० ॥ विष्णुपादोदकंपुण्यंतन्नैवेद्यंशुभप्रदम् ॥
गङ्गोदकंचपुण्यंचभोजयायासचन्द्रकम् ॥ ६१ ॥ क्रोडेकृत्वातुतंभीतंलज्जितंपापकर्म्मणा ॥ कुशहस्तइत्युवाचस्मारंस्मारंहरिंमुने ॥
॥ ६२ ॥ शुक्रउवाच ॥ यद्यस्तिमेतपःसत्यंसत्यंपूजाफलंहरे ॥ सत्यंव्रतफलंचैवसत्यंसत्यवचःफलम् ॥ ६३ ॥ तीर्थस्नानफलंसत्यंसत्यं
दानफलंयदि ॥ उपवासफलंसत्यंपापान्मुक्तोभवान्भवेत् ॥ ६४ ॥ त्रिसन्ध्याहीनंविप्रंचविष्णुपूजाविहीनकम् ॥ तंगच्छतुमहाघोरंच
न्द्रपापंसुदारुणम् ॥ ६५ ॥ स्वभार्य्यांवंचनंकृत्वायःप्रयातिपरस्त्रियम् ॥ सयातुनरकंघोरंचन्द्रपापेनपातकी ॥ ६६ ॥ वाचावाता
डयेत्कान्तंदुःशीलादुर्मुखाचया ॥ सायुगंचन्द्रपापेनयातुलालामुखंध्रुवम् ॥ ६७ ॥ अनैवेद्यंवृथान्नंचयश्चभुङ्क्तेहरेर्द्विजः ॥ सयातुका
लसूत्रंचचन्द्रपापाच्चतुर्युगम् ॥ ६८ ॥ अम्बुवाच्यांभूखननंकरोतियोनराधमः ॥ चन्द्रपापाद्युगशतंकालसूत्रंसगच्छतु ॥ ६९ ॥
स्वकान्तंवंचनंकृत्वायायातिपरपूरुषम् ॥ सायातुवह्निकुण्डंचचन्द्रपापाच्चतुर्युगम् ॥ ७१ ॥ कीर्त्तिंकरोतिरजसापरकीर्त्तिंविलुप्यच ॥
सयुगंचन्द्रपापेनकुम्भीपाकञ्चगच्छतु ॥ ७१ ॥ पितरंमातरंभार्य्यांयोनपुष्णातिपातकी ॥ स्वगुरुंचन्द्रपापेनयातुचाण्डालतांध्रुवम्
॥ ७२ ॥ कुलटान्नमवीरान्नंऋतुस्नातान्नमेवच ॥ योऽश्नातिचन्द्रपापञ्चतंयातुपापिनंध्रुवम् ॥ ७३ ॥ सयातुतेनपापेनकुम्भीपाकंचतु
र्युगम् ॥ तस्माद्दुत्तीर्य्यचाण्डालींयोनिमाप्नोतिपातकी ॥ ७४ ॥ दिवसेयोग्राम्यधर्ममहापापीकरोतिच ॥ योगच्छेत्कामतःकामीगुर्वि
णींवारजस्वलाम् ॥ ७५ ॥ तंयातुचन्द्रपापञ्चमहाघोरञ्चपापिनम् ॥ सयातुतेनपापेनकालसूत्रंचतुर्युगम् ॥ ७६ ॥ मुखंश्रोणींस्तनञ्चा

१ यद्यद्यइतिपाठः।

पियोपश्यतिपरस्त्रियाः ॥ कामतःकामदग्धश्चतंयातुचन्द्रकल्मषम् ॥ ७७ ॥ सयातुलालाभक्ष्यश्चचन्द्रपापाच्चतुर्युगम्॥ तस्मादुत्तीर्य्य
भवतुचाण्डालोन्धोनपुंसकः ॥ ७८ ॥ कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्याष्टमीषुच ॥ मांसंमसूरंलकुचंयश्चभुङ्क्तेरवेर्दिने ॥ ७९ ॥ कुरुतेग्रा
म्यधर्म्मंश्चतंयातुचन्द्रकिल्बिषम् ॥ चतुर्युगंकालसूत्रंतेनपापेनगच्छतु ॥ ८० ॥ तस्मादुत्तीर्य्यचाण्डालींयोनिमाप्नोतिपातकी ॥ सप्त
जन्ममहारोगीदरिद्रःकुब्जएवच ॥ ८१ ॥ एकादश्यांचयोभुङ्क्तेकृष्णजन्माष्टमीदिने ॥ शिवरात्रौमहापापीतंयातुचन्द्रपातकम् ॥८२॥
सयातुकुम्भीपाकश्चयावदिन्द्राश्चतुर्दश ॥ तेनपापेनप्राप्नोतुचाण्डालींयोनिमेवच ॥ ८३ ॥ ताम्रस्थंदुग्धमाध्वीकमुच्छिष्टेघृतमेवच ॥
नारिकेलोदकंकांस्येदुग्धंसलवणंतथा ॥ ८४ ॥ पीतशेषजलंचैवभक्षावशेषमोदनम् ॥ ओदनमसकृद्भुङ्क्तेसूर्य्येनास्तंगतेद्विजः॥८५॥
तंयातुचन्द्रपापश्चदुर्निवारश्चदारुणम् ॥ सयातुतेनपापेनचान्धकूपंचतुर्युगम् ॥ ८६ ॥ स्वकन्याविक्रयीविप्रोदेवलोवृषवाहकः ॥ शूद्रा
णांशवदाहीचतेषांचसूपकारकः ॥ ८७ ॥ अश्वत्थतरुघातीचविष्णुवैष्णवनिन्दकः ॥ तंयातुचन्द्रपापश्चदारुणंपापिनंभृशम् ॥ ८८ ॥
सयातुतस्मात्पापाच्चतप्तसूर्मींश्चपातकी ॥ शश्वद्दग्धोभवतुसयावदिन्द्राश्चतुर्दश ॥ ८९ ॥ तस्मादुत्तीर्य्यचाण्डालींयोनिमाप्नोतिपात
की ॥ सप्तजन्मसचाण्डालोवृषश्चजन्मपंचच॥ ९० ॥ गर्दभोजन्मशतकंशूकरोजन्मसप्तच ॥ तीर्थध्वांक्षोजन्मसप्तविट्क्रमिर्जन्मपञ्चच ॥
जलौकाजन्मशतकंशुचिर्भवतुतत्परम् ॥ ९१ ॥ वृथामांसंचयोभुङ्क्तेस्वार्थपाकान्नमेवच॥तददत्तंमहापापीप्राप्नोतुचन्द्रपातकम् ॥९२॥
सयातुचन्द्रपापेनचासीपत्रंचतुर्युगम् ॥ ततोभवतुसर्पश्चपशुश्चसप्तजन्मच ॥९३॥ विप्रोवार्द्धुषिकोयोहियोनिजीवीचिकित्सकः ॥ हरेर्ना
म्नांचविक्रेतायश्चवास्वाङ्गविक्रयी ॥ ९४ ॥ स्वधर्म्मकथकश्चैवयश्चस्वात्मप्रशंसकः ॥ मसीजीवीधावकश्चकुलटापोष्यएवच ॥ ९५ ॥ तं
यातुचन्द्रपापश्चचन्द्रोभवतुविज्वरः ॥ सयातुतेनपापेनशूलप्रोतंसुदारुणम् ॥ ९६ ॥ तत्रविद्धोभवतुसयावदिन्द्राश्चतुर्दश ॥ ततोद
रिद्रोरोगीचदीक्षाहीनोनरःपशुः ॥ ९७ ॥ लाक्षामांसरसानांचतिलानांलवणस्यच ॥ अश्वानांचैवलौहानांविक्रेतानरघातकः ॥ ९८॥
चौरश्चविप्रोघट्टीशस्तंयातुचन्द्रपातकम् ॥ सयातुतेनपापेनक्षुरधारंसुदुःसहम् ॥ ९९ ॥ तत्रछिन्नोभवतुसयावदिन्द्रसहस्रकम् ॥ तस्मा

तृतीर्य्यंभवतुश्शृगालःसप्तजन्मसु ॥ १०० ॥ सप्तजन्मचमार्जारोमहिषोजन्मपञ्चकम् ॥ सप्तजन्मचभल्लूकःकुक्कुरोसप्तजंन्मच ॥ १०१ ॥ मत्स्यश्श्वजन्मशतकंकर्कटीजन्मपञ्चकम् ॥ गोधिकाजन्मशतकंगर्दभःसप्तजन्मसु ॥ १०२ ॥ सप्तजन्मचमण्डूकस्ततश्चमानवोऽधमः ॥ चर्म्मकारश्चरजकस्तैलकारश्चवार्द्धकी ॥ १०३ ॥ नाविकःशवजीवीचव्याधश्चस्वर्णकारकः ॥ कुम्भकारोलोहकारस्ततःक्षत्रस्ततोद्विजः ॥ १०४ ॥ इतिचन्द्रंशुचिंकृत्वासमुवाचतुतारकाम् ॥ त्यक्त्वाचन्द्रंमहासाध्विगच्छकान्तामितिद्विजः ॥ १०५ ॥ प्रायश्चित्तंविनापूता त्वमेवशुद्धमानसा॥अकामायाबलिष्ठेननस्त्रीजारेणदुष्यति ॥१०६॥ इत्येवमुक्त्वाशुक्रश्चचन्द्रश्चतारकांसतीम्॥सस्मितांसस्मितंचैवचकार चशुभाभिषम् ॥१०७॥ इतिश्रीब्रह्मवैवर्त्तमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डेदुर्गोपाख्यानंनामअष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

॥ नारदउवाच ॥ बृहस्पतिःकिञ्चकारतारकाहरणान्तरे ॥ कथंसंप्रापतांसाध्वींतन्मेव्याख्यातुमर्हसि ॥ १ ॥ श्रीनारायणउवाच ॥ दृ ष्ट्वाविलम्बंतारायाःस्त्रान्त्याश्चापिगुरुःस्वयम् ॥ प्रस्थापयामासशिष्यमन्वेषार्थञ्चस्वर्णदीम् ॥ २ ॥ शिष्योगत्वास्वर्णदींञ्चसंप्राप्यलोक वक्त्रतः ॥ रुदन्नुवाचस्वगुरुंतारकाहरणंमुने ॥ ३ ॥ श्रुत्वासुरगुरुर्वार्तांशशिनाचप्रियांहृताम् ॥ मुहूर्त्तंप्रापमूर्च्छांचततःसंप्रापचेतनाम्॥ ॥४॥रुरोदोच्चैःसशिष्यश्चहृदयेनविदूयता ॥ शोकेनलज्जयाविप्रोविललापमुहुर्मुहुः ॥५॥उवाचशिष्यान्सम्बोध्यनीतिंचश्रुतिसम्मताम्॥ साश्रुनेत्रःसाश्रुनेत्रान्शोकार्तःशोककर्षितान्॥६॥ बृहस्पतिरुवाच॥हेवत्साःकेनशप्तोऽहंनजानेकारणंपरम्॥ दुःखंधर्म्मविरुद्धोयःसप्राप्नो तिनसंशयः ॥७॥ यस्यनास्तिसतीभार्य्यागृहेषुप्रियवादिनी॥अरण्यंतेनगतव्यंयथारण्यंतथागृहम् ॥८ ॥ भावानुरक्तावनिताहृतायस्य चशत्रुणा ॥ अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम् ॥९॥ सुशीलासुन्दरीभार्य्यागतायस्यगृहादहो ॥अरण्यंतेनगन्तव्यंयथारण्यंतथागृह म् ॥ १० ॥ दैवेनापहृतायस्यपतिसाध्यापतिव्रता ॥ अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम् ॥ ११ ॥ यस्यमातागृहेनास्तिगृहिणीवा सुशासिता॥अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम्॥१२॥प्रियाहीनंगृहंयस्यपूर्णंद्रविणबन्धुभिः॥अरण्यंतेनगन्तव्यंयथारण्यंतथागृहम् ॥

---

१ जन्मपंचकमितिपाठः । २ आखुश्चजन्मशतकंकुक्कुटीतिपाठः। ३ भ्रान्त्याइतिपाठः । ४ सुन्दरीमितिपाठः ।

॥ १३ ॥ भार्य्याशून्यावनसमाःसभार्य्याश्चगृहागृहाः ॥ गृहिणीचगृहंप्रोक्तंनगृहंगृहमुच्यते ॥ १४ ॥ अशुचिःस्त्रीविहीनश्चदैवेपैत्र्येचकर्मणि ॥ यदह्नाकुरुतेकर्मनतस्यफलभाग्भवेत् ॥ १५ ॥ दाहिकाशक्तिहीनश्चयथामन्दोहुताशनः ॥ प्रभाहीनोयथासूर्य्यःशोभाहीनोयथा शशी ॥ १६ ॥ शक्तिहीनोयथाजीवोयथाचात्मातनुंविना ॥ विनाधारंयथाधेयोयथेशःप्रकृतिंविना ॥ १७ ॥ नचशक्तोयथायज्ञःफलदो दक्षिणांविना ॥ कर्मणांचफलंदातुंसामग्रीमूलमेवच ॥ १८ ॥ विनास्वर्णंस्वर्णकारोयथाशक्तःस्वकर्मणि ॥ यथाशक्तःकुलालश्चमृत्तिकां[1]च विनाद्विजाः ॥ १९ ॥ तथागृहीनशक्तश्चसन्ततंसर्वकर्माणि ॥ गृहाधिष्ठातृदेवींचस्वशक्तींगृहिणींविना ॥ २० ॥ भार्य्यामूलाःक्रियाः[2]सर्वाः भार्य्यामूलागृहास्तथा ॥ भार्य्यामूलंसुखंसर्वंगृहस्थानांगृहेसदा ॥२१ ॥ भार्य्यामूलःसदाहर्षोभार्य्यामूलंचमङ्गलम् ॥ भार्य्यामूलंचसंसारो भार्य्यामूलंचसौ[3]रंभम् ॥ २२ ॥ यथारथश्चरथिनांगृहीणांचतथागृहम् ॥ सारथिस्तुयथातेषांगृहिणांचतथाप्रिया ॥ २३॥सर्वरत्नप्रधाना चस्त्रीरत्नंदुष्कुलादपि ॥ गृहीतासागृहस्थेनैवेत्याहकमलोद्भवः॥ २४ ॥ यथाजलंविनापद्मंपद्मंशोभांविनायथा ॥ तथैवचखगृहस्थंगृहिणां गृहिणींविना॥२५॥इत्येवमुक्त्वासगुरुःप्रविवेशगृहंमुहुः ॥ गृहाद्बहिर्निःससारभूयोभूयःशुचान्वितः॥ २६ ॥मुहुर्मुहुश्चमूर्च्छांचचेतनांसमवा पसः ॥ भूयोभूयोरुरोदोच्चैःस्मारंस्मारंप्रियागुणान् ॥ २७ ॥ अथान्तरंमहाज्ञानीज्ञानिभिश्चप्रबोधितः ॥ सच्छिष्यैर्मुनिभिश्चान्यैःपुरन्द रगृहंययौ ॥२८॥ सगुरुःपूजितस्तेनचातिथ्येनमरुत्वता॥तमुवाचस्ववृत्तान्तंहृदिशल्यमिवाप्रियम् ॥ २९ ॥ बृहस्पतिवचःश्रुत्वारक्तप ङ्कजलोचनः ॥ तमुवाचमहेन्द्रश्चकोपप्रस्फुरिताधरः ॥ ३०॥ महेन्द्रउवाच ॥ दूतानांचसहस्रश्चगच्छन्तुजारकर्मणि ॥ अतीवनिपुणं दक्षंतत्वप्राप्तिनिमित्तकम् ॥ ३१ ॥ यत्रास्तिपातकीचन्द्रोमन्मात्रातारयासह ॥ गच्छामितत्रसन्नद्धःसर्वैर्देवगणैःसह ॥ ३२ ॥ त्यजाचि न्तांमहाभागसर्वंभद्रंभविष्यति ॥ भद्रबीजंदुर्गमिदंकस्यसम्पद्विपद्विना ॥ ३३ ॥ इत्युक्त्वाचसुनाशीरोदूतानाञ्चसहस्रकम् ॥ तूर्णंप्रस्था पयामासतत्कर्मनिपुणंमुने ॥ ३४ ॥ तेदूताश्चवर्षशतंययुर्निर्जनमेवच ॥ सुदुर्लंघ्यश्चविश्वेषुभ्रमित्वाशक्रमाययुः ॥ ३५ ॥ चन्द्रश्चशु

१ घटंचमृत्तिकांविनाइतिपाठः । २ चपुत्राश्चेतिपाठः । ३ सौरतमितिपाठः ।

क्रमवनेततत्प्रपन्नंचविज्वरम् ॥ दृष्ट्वासतारकंभीतंकथयामासुरीश्वरम् ॥ ३६ ॥ इतिश्रुत्वासुनाशीरोनतवक्त्रोबृहस्पतिम् ॥ उवाचशोक
सन्तप्तोहृदयेनविदूयता ॥ ३७ ॥ महेन्द्रउवाच ॥ शृणुनाथप्रवक्ष्यामिपरिणामसुखावहम् ॥ भयंत्यजमहाभागसर्वंभद्रंभविष्यति॥३८॥
त्वयानाहिजितःशुक्रोनमयादितिनन्दनः ॥ एतदालोच्यचन्द्रश्चजगामशरणंकविम् ॥ ३९ ॥ गच्छशीघ्रंब्रह्मलोकमस्माभिःसार्द्धमेवच॥
ब्रह्मणासहयास्यामःकैलासेशङ्करंवयम्[1] ॥ ४० ॥ इत्युक्त्वातुमहेन्द्रश्चसन्तप्तोगुरुणासह ॥ जगामब्रह्मलोकञ्चसुखदृश्यंनिरामयम् ॥ ४१ ॥
तत्रदृष्ट्वाचब्रह्माणंननामगुरुणासह ॥ प्रोवाचसर्ववृत्तान्तंदेवानामीश्वरंपरम् ॥ ४२ ॥ महेन्द्रवचनंश्रुत्वाजहासकमलोद्भवः ॥ हितंतथ्यं
नीतिसारमुवाचविनयान्वितः ॥ ४३ ॥ ब्रह्मोवाच ॥ योददातिपरस्मैचदुःखमेवचसर्वतः ॥ तस्मैददातिदुःखञ्चशास्ताकृष्णःसनात
नः ॥ ४४ ॥ अहंस्रष्टाचसृष्टेश्चपातािविष्णुःसनातनः ॥ यथारुद्रश्चसंहर्त्तादद्ातिचशिवंशिवः ॥ ४५ ॥ निरन्तरंसर्वसाक्षीधर्मश्चसर्वकार
णं ॥ सर्वेदेवाविषयिणःकृष्णाज्ञापरिपालकाः ॥४६॥ बृहस्पतिरुतथ्यश्चसंवर्त्तश्चजितेन्द्रियः ॥ त्रयश्चांगिरसःपुत्रोवेदवेदाङ्गपारगाः ॥
॥ ४७ ॥ संवर्त्तायकनिष्ठायनचकिञ्चिद्ददौगुरुः ॥ सबभूवतपस्वीचध्यायतेकृष्णमीश्वरम् ॥ ४८ ॥ उतथ्यस्यमध्यमस्यभार्य्यांचगुर्वि
णींसतीम् ॥ जहारकामतस्तांचभ्रातृजायामकामुकीम् ॥ ४९ ॥ योहरेद्भ्रातृजायांचकामीकामादकामुकीम्॥ब्रह्महत्यासहस्रंचलभतेना
त्रसंशयः ॥ ५० ॥ सयातिकुम्भीपाकञ्चयावच्चन्द्रादिवाकरौ ॥ भ्रातृजायापहारीचमातृगामीभवेन्नरः ॥ ५१ ॥ तस्मादुत्तीर्य्यपापीचवि
ष्ठायांजायतेकृमिः ॥ वर्षकोटिसहस्राणितत्रस्थित्वाचपातकी ॥ ५२ ॥ ततोभवेन्महापापीवर्षकोटिसहस्रकम् ॥ पुंश्चलीयोनिगर्त्तेचकृ
मिश्चैवपुरन्दर ॥ ५३ ॥ गृध्रकोटिसहस्राणिशतजन्मानिकुक्कुरः ॥ भ्रातृजायापहरणाच्छतजन्मानिशूकरः ॥ ५४ ॥ योनददातिदायञ्चव
लिष्ठोदुर्बलायच ॥सयातिकुम्भीपाकञ्चयावच्चन्द्रादिवाकरौ ॥ ५५ ॥ माभुङ्क्तेक्षीयतेकर्म्मकल्पकोटिशतैरपि ॥ अवश्यमेवभोक्तव्यंकृ
तंकर्मशुभाशुभम् ॥५६ ॥ जगद्गुरोःशिवस्यापिगुरुपुत्रोबृहस्पतिः ॥ ज्ञातंकरोतुवृत्तान्तमीश्वरंबलिनांवरम् ॥ ५७ ॥ सर्वेसमूहादेवा

१ कैलासंशंकरालयमितिपाठः ।

नासन्नद्वाश्वसवाहनाः॥मध्यस्थामुनयश्चैवतिष्ठन्तुनर्मदातटे॥५८॥ पश्चादहञ्चयास्यामिपुण्यश्चनर्म्मदातटम् ॥ गुरुस्तद्गुरुपुत्रोपिशीघ्रंयातुशिवालयम् ॥५९॥ महेन्द्रउवाच ॥कथंवावेदकर्त्तुश्चसिद्धानांयोगिनांगुरोः॥मृत्युञ्जयस्यशम्भोश्चगुरुपुत्रोबृहस्पतिः॥६०॥अङ्गिरास्तवपुत्रश्चतत्पुत्रश्चबृहस्पतिः ॥ त्वत्तोज्ञानीमहादेवःकथंशिष्योगुरोःपितुः ॥ ६१ ॥ ब्रह्मोवाच ॥ कथेयमतिगुप्ताचपुराणेषुपुरन्दर ॥ इमांपुराप्रवृत्तिंचकथयामिनिशामय ॥६२ ॥ मृतवत्साकर्म्मदोषाद्भार्य्याचाङ्गिरसःपुरा ॥ व्रतंचकारसाचैवंकृष्णस्यपरमात्मनः ॥ ६३॥ व्रतंपुंसवनंनामवर्षमेकंचकारसा ॥ सनत्कुमारोभगवान्कारयामासतांव्रतम् ॥ ६४ ॥ तदागत्यचगोलोकात्परमात्माकृपामयः ॥ स्वेच्छामयंपरंब्रह्मभक्तानुग्रहविग्रहः॥६५॥ सुव्रतांचसलक्ष्मीकांतामुवाचकृपानिधिः ॥ प्रणतांसाश्रुनेत्रांचविनीतांचतयास्तुतः॥६६॥ श्रीकृष्णउवाच ॥ गृहाणेदंव्रतफलंममतेजःसमन्वितम् ॥ भुंक्ष्वमद्वरतःपुत्रीभविष्यतिमदंशतः ॥ ६७ ॥ पतिर्गुरुश्चदेवानांबृहतांज्ञानिनांवरः ॥ पुत्रस्तेभवितासाध्विमद्वरेणबृहस्पतिः॥ ६८ ॥ मद्वरेणभवेद्योहिसचमद्वरपुत्रकः ॥ त्वद्गर्भेममपुत्रोऽयंचिरजीवीभविष्यति ॥ ॥ ६९ ॥ वरजोवीर्य्यजश्चैवक्षेत्रजःपालकस्तथा ॥ विद्यामन्त्रसुतौचैवगृहीतःसप्तमःसुतः ॥ ७० ॥ इत्युक्त्वाराधिकानाथःस्वलोकंचजगामसः ॥ श्रीकृष्णवरपुत्रोऽयंज्ञानिशिवरगुरुःस्वयम् ॥ मृत्युञ्जयंमहाज्ञानंशिवायप्रददौपुरा ॥ ७१ ॥ दिव्यंवर्षत्रिलक्षञ्चतपश्चक्रेहिमालये स्वयोगंज्ञानमखिलंतेजःस्वात्मसमंपरम् ॥ स्वशक्तिंविष्णुमायांचस्वांशञ्चवाहनंवृषम् ॥ ७२ ॥ स्वशूलञ्चस्वकवचंस्वमन्त्रंद्वादशाक्षरम् ॥ कृपामयःस्तुतस्तेनश्रीकृष्णश्चपरात्परः ॥ शिवलोकेशिवासाचविष्णुमायाशिवप्रिया ॥ ७३ ॥ शक्तिर्नारायणस्येयंसाविर्भूतासनातनी ॥ तेजःसुसर्वदेवानांसाविर्भूतासनातनी ॥ ७४ ॥ जघानदैत्यनिकरंदेवेभ्यःप्रददौपदम् ॥ कल्पान्तेदक्षकन्याचसामूलप्रकृतिःसती ॥ ॥ ७५ ॥ पितृयज्ञेतनुंत्यक्त्वायोगेनसिद्धयोगिनी ॥ बभूवशैलकन्यासासाध्वीचभर्तृनिन्दया ॥ ७६ ॥ कालेनकृष्णतपसाशङ्करंप्रापसुन्दरी ॥ श्रीकृष्णोहिगुरुःशम्भोःपरमात्मापरात्परः ॥ ७७ ॥ कृष्णस्यवरपुत्रोऽयंस्वयमेवबृहस्पतिः ॥ अतोहेतोःसुरगुरुर्गुरुपुत्रःशिवस्यच ॥ ७८ ॥ इत्येवंकथितंसर्वमतिगुह्यंपुरातनम् ॥ इतिप्रधानसम्बन्धःश्रुतश्चकथितोमया ॥ ७९ ॥ पारम्परिकमन्यञ्चकथयामिनिशाम

य ॥ दुर्वासागरुडश्चैवशङ्करांशःप्रतापवान् ॥ ८० ॥ शिष्यौचाङ्गिरसस्तौद्वौगुरुपुत्रोऽथवाततः ॥ प्राणाधिकायांसत्यांचमृतायांदक्ष
शापतः ॥ ८१ ॥ स्वज्ञानंस्वंचभगवान्विसस्मारस्वमोहतः ॥ स्मरणंकारयामासकृष्णेनप्रेरितोऽङ्गिराः ॥ ८२ ॥ अतोहेतोर्गुरुश्चैव
शिवस्यमत्सुतश्चसः ॥ शीघ्रंगच्छतुकैलासंस्वयमेवबृहस्पतिः ॥ ८३ ॥ त्वंगच्छतत्रसन्नद्धःसदेवोनर्म्मदातटम् ॥ इत्युक्त्वाजगतांधाता
विररामचनारद ॥ ८४ ॥ गुरुर्ययौचकैलासंमहेन्द्रोनर्म्मदातटम् ॥ ८५ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डे
दुर्गोपाख्यानेएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

नारदउवाच ॥ नारायणमहाभागवेदवेदाङ्गपारग ॥ निपीतश्चसुधाख्यानंतन्मुखेन्दुविनिःसृतं ॥ १ ॥ अधुनाश्रोतुमिच्छासिकिमुवा
चबृहस्पतिः ॥ शिवश्चगत्वाकैलासंदातारंसर्वसम्पदाम् ॥ २ ॥ जगत्कर्त्ताविधाताचकिंवातंप्रत्युवाचसः ॥ एतत्सर्वसमालोच्यवदवेदवि
दांवर ॥ ३ ॥ नारायणउवाच ॥ शीघ्रंगत्वाचकैलासंभ्रष्टश्रीःशङ्करंगुरुः ॥ प्रणम्यतस्थौपुरतोलज्जामलिनविग्रहः ॥ ४ ॥ दृष्ट्वागुरुसुतंश
म्भुरुदतिष्ठत्कुशासनात् ॥ आलिङ्गनंददौतस्मैशीघ्रंमङ्गलमाशिषम् ॥ ५ ॥ स्वासनेवासयित्वाचप्रपच्छकुशलंवचः ॥ उवाचमधुरंवाक्यं
भीतंतंलज्जितंशिवः ॥ ६ ॥ श्रीशङ्करउवाच ॥ कथमेवंविधस्त्वञ्चदुःखीमलिनविग्रहः ॥ साश्रुनेत्रोलज्जितश्चभ्रातस्तत्कारणंवद ॥ ७ ॥
किंवातपस्याहीनातेसन्ध्याहीनाऽथवामुने ॥ किंवाश्रीकृष्णसेवाचविहीनादैवदोषतः ॥ ८ ॥ किंवागुरौभक्तिहीनोऽभीष्टदेवेऽथवागुरौ
॥ किंवानरक्षितुंशक्तःप्रपन्नंशरणागतम् ॥ ९ ॥ किंवाऽतिथिस्तेविमुखःकिंवापोष्याबुभुक्षिताः ॥ किंवास्वतन्त्रास्त्रीवातेकिंवापुत्रोऽ
वचस्करः ॥ १० ॥ सुशासितोनशिष्योवाकिंभृत्याश्चोत्तरप्रदाः । किंवातेविमुखालक्ष्मीःकिंवारुष्टोगुरुस्तव ॥ ११ ॥ गरिष्ठश्चवरिष्ठश्च
शश्वत्सन्तुष्टमानसः ॥ गुरुस्तववसिष्ठश्चप्रेष्ठःश्रेष्ठःसतामहो ॥ १२ ॥ किंवारुष्टोऽभीष्टदेवःकिंवारुष्टाश्चब्राह्मणाः ॥ किंवारुष्टावैष्णवाश्च
किंवातेप्रबलोरिपुः ॥ १३ ॥ किंवातेबन्धुविच्छेदोविग्रहोबलिनासह ॥ किंवापदंपरग्रस्तंकिंवाबन्धुधनश्चवा ॥ १४ ॥ केनतेवाकृतानि
न्दाखलेनपापिनामुने ॥ केनवात्वंपरित्यक्तःप्रियेनबान्धवेनवा ॥ १५ ॥ बन्धुस्त्यक्तस्त्वयाकिंवावैराग्येणक्रुधाथवा ॥ किंवातीर्थेनहि

स्नातंनदत्तंपुण्यवासरे ॥ १६ ॥ गुरुनिन्दाबन्धुनिन्दाखलवक्राच्छुताथवा ॥ गुरुनिन्दाहिसाधूनांमरणादतिरिच्यते ॥ १७ ॥ असद्वंशप्रजातानांखलानांनिन्दनंतथा ॥ दुःशीलमेवमसतांशश्वन्नारकिणामिह ॥ १८ ॥ परप्रशंसकाःसन्तःपुण्यवन्तोहिभारते ॥ शश्वन्मङ्गलयुक्ताश्चराजन्तेमनसासदा ॥ १९ ॥ पुत्रेयशसितोयेचसमृद्धेचपराक्रमे ॥ ऐश्वर्य्येवाप्रतापेचप्रजाभूमिधनेषुच ॥ २० ॥ वचनेषुचबुद्धौचस्वभावेचचरित्रतः ॥ आचारेव्यवहारेचज्ञायतेहृदयंनृणाम् ॥ २१ ॥ यादृग्येषाञ्चहृदयंतादृक्तेषाञ्चमङ्गलम् ॥ यादृग्येषांपूर्वपुण्यंतादृक्तेषाञ्चमानसम् ॥ २२ ॥इत्युक्त्वाचमहादेवोविररामस्वसंसदि ॥ तमुमाचमहावक्तास्वयमेवबृहस्पतिः ॥ २३ ॥ बृहस्पतिरुवाच ॥ अकथ्यमेववृत्तान्तंकथयामिकिमीश्वर ॥ लोकाःकर्मवशीभूतास्तत्कर्मयत्कृतंपुरा ॥ २४ ॥ स्वकर्मणांफलंभुङ्क्तेजन्तुर्जन्मनिजन्मनि ॥ नहिनष्टञ्चतत्कर्मविनाभोगाच्चभारते ॥ २५ ॥ सुखंदुःखंभयंशोकंनराणांभारतेप्रभो ॥ केचिद्वदन्तिहिभवेस्वकृतेनचकर्मणा ॥ २६ ॥ केचिद्वदन्तिदैवेनस्वभावेनेतिकेचन ॥ त्रिविधाश्चमतावेदेवेदवेदाङ्गपारग ॥ २७ ॥ स्वयञ्चकर्मजनकस्तत्कर्मदैवकारणम् ॥ स्वभावोजायतेनृणांस्वात्मनःपूर्वकर्मणः ॥ २८ ॥ स्वकर्मणाञ्चसर्वेषांजन्तूनांप्रतिजन्मनि ॥ सुखंदुःखंभयंशोकंस्वात्मनश्चप्रजायते ॥ २९ ॥ स्वकर्मफलभोक्ताचजीवोहिसगुणःसदा ॥ आत्माभोजयितासाक्षीनिर्गुणःप्रकृतेःपरः ॥ ३० ॥ सएवात्मासर्वसेव्यःसर्वेषाञ्चफलप्रदः ॥ सचसृजतिदैवञ्चस्वभावंकर्मएवच ॥ ३१ ॥ कर्मणाचनृणांलज्जाप्रशंसाचप्रफुल्लता ॥ लज्जाबीजञ्चवृत्तान्तंतथापिकथयामिते ॥ ३२ ॥ इत्युक्त्वासर्ववृत्तान्तमुवाचतंबृहस्पतिः ॥ श्रुत्वाबभूवनम्रास्योगौरीशोलज्जयातदा ॥ ३३ ॥ जपमालाकराद्भ्रष्टाकोपाविष्टस्यशूलिनः ॥ बभूवसद्यःकम्पश्चरक्तपङ्कजलोचने ॥ ३४ ॥ संहर्त्तुरीशोरुद्रस्यविष्णोःपातुःसखाशिवः ॥ स्रष्टुस्तुत्यश्चमान्यश्चस्वात्मनःपरमात्मनः ॥ ३५ ॥ निर्गुणस्यचकृष्णस्यप्रकृतीशस्यनारद ॥ कोपात्प्रवक्तुमारेभेशुष्ककण्ठौष्ठतालुकः ॥ ३६॥ शिवउवाच शिवमस्तुचसाधूनांवैष्णवानांसतामिह॥अवैष्णवानामसतामशिवञ्चपदेपदे॥३७॥ ददातिवैष्णवेभ्यश्चयोदुःखंसुस्थितोजनः॥श्रीकृष्णस्त

---

१ मित्रइतिपाठः । २ स्रष्टुःश्रेष्ठश्चेतिपाठः ।

स्यसंहर्त्तांविघ्नस्तस्यपदेपदे ॥ ३८ ॥ अवैष्णवानांहृदयंनहिशुद्धंसदामलम् ॥ श्रीकृष्णमन्त्रस्मरणंमनोनैर्मल्यकारणम् ३९ ॥ भिद्यत
हृदयग्रन्थिश्छिद्यतेसर्वसंशयः ॥ विष्णुमन्त्रोपासनयाक्षीयतेकर्मतन्नृणाम् ॥ ४० ॥ अहोश्रीकृष्णदासानांकःस्वभावःसुनिर्मलः ॥ हृ
तभार्य्यंमूर्च्छितश्चनशशापरिपुंगुरुः ॥ ४१ ॥ गुरुर्यस्यवसिष्ठश्चक्रोधहीनश्चधार्मिकः ॥ हन्तारश्चपुत्रशतंनशशापरिपुंमुनिः ॥ ४२ ॥
निश्वासेनसुरगुरोर्भ्रातुर्ममबृहस्पतेः ॥ भस्मीभूतोनिमेषेणशतचन्द्रोभवेद्ध्रुवम् ॥ ४३ ॥ तथापितंनशशापधर्म्मभङ्गभयेनच ॥ तपस्या
हीयतेशश्वुःकोपाविष्टस्यनित्यशः॥ ४४ ॥ अहोह्यत्रेरसत्पुत्रःपरस्त्रीलुब्धकःशठः ॥ तपस्विनोवैष्णवस्यब्रह्मपुत्रस्यधर्मिणः ॥ ४५ ॥
धर्मिष्ठाब्रह्मणःपुत्रावैष्णवाब्राह्मणास्तथा ॥ केचिद्देवाद्विजादैत्याःपौत्राश्चत्रिविधामताः॥४६॥ येसात्विकाब्राह्मणास्तेदेवाराजसिकास्त
था ॥ दैत्यास्तामसिकारौद्राबलिष्ठाश्चोद्धताःसदा ॥ ४७ ॥ स्वधर्म्मनिरताविप्रानारायणपरायणाः ॥ शैवाःशाक्ताश्चतेदेवादैत्याःपूजा
विवर्जिताः ॥ ४८ ॥ मुमुक्षवोविष्णुभक्ताब्राह्मणादास्यलिप्सवः ॥ ऐश्वर्य्यलिप्सवोदेवाश्चासुरास्तामसास्तथा ॥ ४९ ॥ ब्राह्मणानां
स्वधर्म्मश्चकृष्णस्यार्च्चनमीप्सितम् ॥ निष्कामानांनिर्गुणस्यपरस्यप्रकृतेरपि ॥ ५० ॥ येब्राह्मणावैष्णवाश्चस्वतन्त्राःपरमंपदम् ॥
यान्त्यन्योपासकाश्चान्यैःसार्द्धश्चप्राकृतेलये ॥५१॥ वर्णानांब्राह्मणाःश्रेष्ठाःसाधवोवैष्णवायदि ॥ विष्णुमन्त्रविहीनेभ्योद्विजेभ्यःश्वप
चोवरः ॥ ५२ ॥ परिपक्वाविपक्वावावैष्णवाःसाधवश्चते ॥ सन्ततंपातितांश्चैवविष्णुचक्रंसुदर्शनम् ॥ ५३ ॥ यथावह्नौशुष्कतृणंभस्मी
भूतंभवेत्सदा ॥ तथापापंवैष्णवेषुकाष्ठानिवहुताशने ॥ ५४ ॥ गुरुवक्राद्विष्णुमन्त्रोयस्यकर्णेप्रवेक्ष्यति ॥ तंवैष्णवंमहापूतंप्रवदन्तिमनी
षिणः ॥ ५५ ॥ पुंसांशतंपितॄणाञ्चशतंमातामहस्यच ॥ स्वसोदरांश्चजननिमुद्धरन्त्येववैष्णवाः ॥ ५६ ॥ गयायांपिण्डदानेनापिण्डदाःपि
ण्डभोजिनम् ॥ समुद्धरन्तिपुंसाञ्चवैष्णवाश्चशतंशतम् ॥ ५७ ॥ मन्त्रग्रहणमात्रेणजीवन्मुक्तोभवेन्नरः ॥ यमस्तस्मान्महाभीतोवैनतेया
दिवोरगः ॥ ५८ ॥ निष्पुनंत्येवतीर्थानिगङ्गादीनिचभारते ॥ कृष्णमन्त्रोपासकाश्चस्पर्शमात्रेणवाक्पते ॥ ५९ ॥ पापानिपापिनांतीर्थे
यावन्तिप्रभवन्तिच ॥ नश्यन्तितानिसर्वाणिवैष्णवस्पर्शमात्रतः ॥ ६० ॥ कृष्णमन्त्रोपासकानांरजसापादपद्मयोः ॥ सद्योमुक्तापातके

भ्यःकृत्स्नापूतावसुन्धरा ॥ ६१ ॥ वायुश्चपवनोवह्निःसूर्य्यःसर्वंपुनातिच ॥ एतेपूतावैष्णवानांस्पर्शमात्रेणलीलया ॥ ६२ ॥ अहंब्रह्मा
चशेषश्चधर्मःसाक्षीचकर्म्मणाम् ॥ एतेहृष्टाश्चवाञ्छन्तिवैष्णवानांसमागमम् ॥ ६३ ॥ फलंकर्मानुरूपेणसर्वेषांभारतेभवेत् ॥ नभवेत्त
द्वैष्णवेचसिद्धधान्येयथाङ्कुरम् ॥ ६४ ॥ हन्तितेषांकर्म्मपूर्वंभक्तानांभक्तवत्सलः ॥ कृपयास्वपदंतेभ्योददात्येवकृपानिधिः ॥ ६५ ॥
तेजस्विनांचप्रवरंवैष्णवंभृगुनन्दनम् ॥ सचन्द्रोदुर्बलोभीतःशुक्रंचशरणंययौ ॥ ६६ ॥ सुदर्शनोद्दलिष्टंचशुक्रंजेतुंनशक्तिमान् ॥ तथा
पिचोद्धरिष्यामितारांमन्त्रणयागुरो ॥ ६७ ॥ भजसत्यंपरंब्रह्मकृष्णमात्मानमीश्वरम् ॥ सुप्रसन्नेभगवतिपत्नींप्राप्स्यसिलीलया ॥६८॥
मन्त्रंतस्यप्रदास्यामिभ्रातःकल्पतरुंपरम् ॥ कोटिजन्माघनिघ्नंचसर्वमङ्गलकारणम् ॥ ६९ ॥ ब्रह्मादिस्तम्बपर्य्यन्तंनश्वरंजलबिम्बव
त् ॥ शरणंयाहिगोविन्दंपरमात्मानमीश्वरम् ॥ तावद्भवेच्छाभोगेच्छास्त्रीसुखेच्छानृणामिह ॥ ७० ॥ यावद्गुरुमुखाम्भोजान्नप्राप्नोति
मनुंहरेः ॥ संप्राप्यदुर्लभंमन्त्रंवितृष्णोहिभवेन्नरः ॥ ७१ ॥ इन्द्रत्वममरत्वंचनहिवाञ्छन्तिवैष्णवाः ॥नहिवाञ्छन्तिमोक्षंचदास्यंभक्तिंवि
नाहरेः ॥ ७२ ॥ भक्तिनिर्मथनंभक्तोनकरोतिचमोक्षणम् ॥ ज्ञानंमृत्युञ्जयत्वंचसर्वसिद्धित्वमीप्सितम् ॥ ७३ ॥ वाक्सिद्धित्वंचब्रह्म
त्वंभक्तानांनहिवाञ्छितम् ॥ भक्तिंविहायकृष्णस्याविषयंयोहिवाञ्छति ॥ ७४ ॥ विषमत्तिसुधांत्यक्त्वावंचितोविष्णुमायया ॥ अहंब्रह्मा
चविष्णुश्चधर्मोऽनन्तश्चकश्यपः ॥ ७५ ॥ कपिलश्चकुमारश्चनरनारायणावृषी ॥ स्वायम्भुवोमनुश्चैवप्रह्लादश्चपराशरः ॥ ७६ ॥ भृगुः
शुक्रश्चदुर्वासावसिष्ठःक्रतुरङ्गिराः ॥ बलिश्चवालिखिल्याश्चवरुणश्चहुताशनः ॥ ७७ ॥ वायुःसूर्य्यश्चगरुडोदक्षोगणपतिःस्वयम् ॥ ए
तेपराभक्तवराःकृष्णस्यपरमात्मनः ॥ ७८ ॥ येचतस्यकलाःश्रेष्ठास्तेतद्भक्तिपरायणाः ॥ इत्युक्त्वाशङ्करस्तस्मैददौकल्पतरुंमनुम् ॥
॥ ७९ ॥ लक्ष्मीमायाकामबीजंङेन्तंकृष्णपदंमुने ॥ परंपूजाविधानश्चस्तोत्रश्चकवचंमुने ॥ ८० ॥ तत्पुरश्चरणंध्यानंसिद्धेमन्दाकिनीत
टे ॥ गुरुःसंप्राप्यतंमन्त्रंशङ्कराच्चजगद्गुरोः ॥ ८१ ॥ विविष्णोहिभवाब्धौचबभूवतमुवाचह ॥८२॥ बृहस्पतिरुवाच ॥ आज्ञांकुरुज
गन्नाथयामितमुंहरेस्तपः ॥ तारातिष्ठतुतत्रैवनतयामेप्रयोजनम् ॥ ८३ ॥ पश्यामिविषतुल्यश्चसर्वंनश्वरमीश्वर ॥ श्रीकृष्णंशरणंया

मिसत्यंनित्यश्चनिर्गुणम् ॥ ८४ ॥ श्रीमहादेवउवाच ॥ परग्रस्तांस्त्रियंत्यक्त्वानप्रशंस्यंतपोमुने ॥ सम्भावितस्यदुश्चर्चामरणादतिरिच्यते ॥ ८५ ॥ पुरोगच्छमहाभागतमेवनर्मदातटम् ॥ यत्रब्रह्मादयोदेवास्तत्राहंयामिसत्वरम् ॥ ८६ ॥ शिवस्यवचनंश्रुत्वाययौसुरगुरुःस्वयम् ॥ आययौचमहाभागःशङ्करोनर्मदातटम् ॥ ८७ ॥ सगणंशङ्करंदृष्ट्वाप्रसन्नवदनेक्षणम् ॥ प्रणेमुर्देवताःसर्वामनवोमुनयस्तथा ॥ ८८ ॥ ननामशम्भुःशिरसाविष्णुश्चकमलोद्भवम् ॥ ददौविष्णुर्महेशायप्रेम्णालिङ्गनमाशिषम् ॥ ८९ ॥ एतस्मिन्नन्तरेतत्रचागमच्च बृहस्पतिः ॥ प्रणनाममहादेवंविष्णुश्चकमलोद्भवम् ॥ ९० ॥ सूर्य्यंधर्ममनन्तश्चनरंमांचमुनीश्वरान् ॥ स्वगुरुंपितरंभक्त्याचोवासतत्र संसदि ॥ ९१ ॥ सञ्चिन्त्यमनसायुक्तिमुवाचतत्रसंसदि ॥ स्वयंविष्णुश्चभगवान्ब्राह्मणंचन्द्रशेखरम् ॥ ९२ ॥ विष्णुरुवाच ॥ युवांच मुनयश्चैवसमुद्रपुलिनंत्वरा ॥ शुक्रंकश्चिच्चमध्यस्थंप्रस्थापयितुमर्हथः ॥ ९३ ॥ विग्रहेणैवविषमंभविष्यातिनसंशयः ॥ मदाशिषासुर गुरुस्तारांप्राप्स्यतिनिश्चितम् ॥ ९४ ॥ सुरैस्तुतश्चसन्तुष्टःशुक्राचार्य्योभविष्यति ॥ सुरैःशुक्रोनजितश्चकृष्णचक्रेणरक्षितः ॥ ९५ ॥ युवाभ्यांप्रार्थ्यमानोऽहंयुवयोःस्तवनेनच ॥ श्वेतद्वीपादागतोऽस्मिपरितुष्टस्तवेनच ॥ शुक्राश्रममसीपर्णसर्वागच्छन्तुदेवताः ॥ ९६ ॥ रिपुर्बलिष्ठःस्तोत्रेणवशीभूतइतिश्रुतिः ॥ इत्युक्त्वाजगतांनाथस्तत्रैवान्तरधीयत ॥ ९७ ॥ स्तुतोब्रह्मादिभिर्देवैःप्रणतैःपरिपूजितः ॥ गतेचजगतांनाथेश्वेतद्वीपंचनारद ॥ ९८ ॥ चिन्तिताश्चसुराःसर्वेविषण्णमानसास्तथा ॥ मुनीन्देवांश्चसंबोध्यब्रह्माचतत्रसंसदि ॥ ९९ ॥ उवाचनीतिसारश्चसम्मतःशङ्करेणसः ॥ १०० ॥ ब्रह्मोवाच ॥ ममशम्भोश्चविष्णोश्चधर्मस्यसर्वसाक्षिणः ॥ अस्माकञ्चसमःस्नेहोदैत्येदेवेचपुत्रकाः ॥ १०१ ॥ दैत्यानांचगुरौशुक्रेप्रपन्नश्चनिशाकरः ॥ नजितश्चसुरैःशुक्रःपूजितोदितिनन्दनैः ॥ १०२ ॥ ताराहेतोरहंयामि शुक्रस्यभवनंसुराः ॥ सर्वेसमुद्रपुलिनंयान्तुविष्णोर्निदेशतः ॥ १०३ ॥ इत्युक्त्वाजगतांधाताजगामशुक्रसन्निधम् ॥ प्रययुर्देवताविप्राःसमुद्रपुलिनंमुने ॥ १०४ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेप्रकृतिखण्डेनारायणनारदसंवादेतारोद्धारणप्रस्तावेषष्टितमोऽध्यायः ॥ ६० ॥

१ ददतुस्तौमहेशायेतिपाठः।

॥ नारदउवाच ॥ ततःपरंकिंरहस्यंबभूवासुरदेवयोः ॥ श्रोतुमिच्छामिभगवन्परंकौतूहलंमम ॥ १ ॥ नारायणउवाच ॥ ब्रह्माजगामानि
लयंशुक्रस्यचमहात्मनः ॥ नानादैत्यगणाकीर्णंरत्नमन्दिरभूषितम् ॥ २ ॥ पञ्चाशत्कोटिभिःशिष्यैःपरीतंब्रह्मत्वादिभिः ॥ सप्तभिःपरिखा
भिश्चवेष्टितंदुर्गमेवच ॥ ३ ॥ रक्षितंरक्षकगणैर्दैत्यैश्चशतकोटिभिः ॥ पद्मरागविराचितैःप्रावारैःपरिशोभितम् ॥ ४ ॥ ददर्शजगतांधा
तासभायांभृगुनन्दनम् ॥ स्तुतंमुनिगणैर्दैत्यैरत्नसिंहासनस्थितम् ॥ ५ ॥ जपन्तंपरमंब्रह्मकृष्णमात्मानमीश्वरम् ॥ शतसूर्य्यप्रभं
शश्वज्ज्वलन्तंब्रह्मतेजसा ॥ ६ ॥ दृष्ट्वापौत्रंप्रभायुक्तंविधाताहृष्टमानसः ॥आत्मानंकृतिनंमेनेपुत्रंपौत्रश्चनारद ॥ ७ ॥ दृष्ट्वापितामहंशुक्रो
धातारंजगतांप्रभुम् ॥ उत्थायसहसाभीतःप्रणनामपुटाञ्जलिः ॥ ८ ॥ प्रदायपूजयामासचोपचाराणिषोडश ॥ तुष्टावपरयाभक्त्या
सम्भ्रमेणयथागमम् ॥ ९ ॥ विद्यामन्त्रप्रदातारंदातारंसर्वसम्पदाम् ॥ स्वकर्म्मणांचफलदंसर्वेषांविश्वतोवरम् ॥ १० ॥ शु
क्रस्यस्तवनेनैवसन्तुष्टोजगतांपतिः ॥ अवरुह्यरथात्तूर्णमुवासतत्रसंसदि ॥ ११ ॥ शुक्रेणशिरसादत्तेरत्नसिंहासनेवरे ॥ तेजसाज्वलिते
रम्येनिर्म्मितेविश्वकर्म्मणा ॥ १२ ॥ शुक्रःप्रणम्यब्रह्माणंकुमारंशकुनंक्रतुम् ॥ वसिष्ठश्चमरीचिश्चसनन्दश्चसनातनम् ॥ १३ ॥
कपिलश्चपञ्चशिखंवोढुमङ्गिरसंमुने ॥ धर्मंमाश्चनरंभक्त्याप्रणनामपुटाञ्जलिः ॥ १४॥ प्रत्येकंपूजयामाससादरश्चयथोचितम् ॥ सिंहासने
षुरत्नेषुवासयामासधार्मिकः ॥ १५ ॥ प्रहृष्टवदनाःसर्वेप्रणेमुर्दितिनन्दनाः ॥ ऋषिसंघाश्चब्रह्माणंतुष्टुवुश्चयथागमम् ॥ १६॥ सर्वान्संस्तू
यसकविरुवाचसम्पुटाञ्जलिः ॥ साश्रुनेत्रःसपुलकःप्रणतोविनयान्वितः॥ १७ ॥ शुक्रउवाच ॥ अद्यमेसफलंजन्मजीवितश्चसुजीवि
तम् ॥ स्वयंविधाताभगवान्साक्षाद्दृष्टःस्वमन्दिरे ॥ १८ ॥ साक्षाद्दृष्टाश्चतत्पुत्राभगवन्तःसनातनाः ॥ तुष्टःकृष्णोऽद्यमामेवंपरमात्मा
परात्परः ॥ १९ ॥ कृतार्थंकर्त्तुमीशा[१]नांयुष्माभिःस्वागतंशिशुम् ॥ स्वात्मारामेषुकुशलंप्रश्नमेवविडम्बनम् ॥ २० ॥ पवित्रंकर्त्तुमीशा
नांहेतुरागमनेतवं[२] ॥ अपरंब्रूहिकिंवापिशाधिनःकरवामकिम् ॥ २१ ॥ ब्रह्मोवाच ॥ उद्विग्नश्चिरविच्छेदात्त्वांपौत्रंद्रष्टुमागतः ॥ विच्छे

१ ईशामामितिपाठः । २ त्रवःइतिपाठः ।

दः पुत्रपौत्राणांमरणादतिरिच्यते ॥ २२ ॥ कुशलंतेमुनिश्रेष्ठपुत्रयोश्चापियोषितः ॥ कुशलंतेस्वधर्माणांकाम्यानांतपसामपि ॥ २३ ॥
दिनेदिनेपरिच्छन्नंश्रीकृष्णार्चनमीप्सितम् ॥ स्वगुरोःसेवनंनित्यमविच्छिन्नंभवेत्तव ॥ २४ ॥ गुर्विष्टयोःपूजनञ्चसर्वमङ्गलकारणम् ॥
पापाधिरोगशोकघ्नंपुण्यहर्षप्रदंशुभम् ॥ २५ ॥ अभीष्टदेवःसन्तुष्टोगुरौतुष्टेनृणामिह ॥ इष्टदेवेचसन्तुष्टेसन्तुष्टाःसर्वदेवताः ॥ २६ ॥
गुरुर्विप्रःसुरोरुष्टोयेषांपातकिनामिह ॥ तेषाञ्चकुशलंनास्तिविघ्नस्तस्यपदेपदे ॥ २७ ॥ तुष्टश्चसन्ततंवत्सश्रीकृष्णःप्रकृतेःपरः ॥
सर्वान्तरात्माभगवांस्तवभक्त्याचनिर्गुणः ॥ २८ ॥ तवतुष्टोगुरुरहंविधाताजगतामपि ॥ मयितुष्टेहरिस्तुष्टोहरौतुष्टेतुदेवताः ॥ २९ ॥
साम्प्रतंशृणुमेहेतुंगमनस्यमुनीश्वर ॥ प्रेषितस्यसुराणाञ्चविश्वसंहर्त्तुरेवच ॥ ३० ॥ शिवस्यगुरुपुत्रस्यसाध्वींतारांबृहस्पतेः ॥ अपहृ
त्यनिशानाथस्तवैवशरणागतः ॥ ३१ ॥ शम्भुर्धर्म्मश्चसूर्य्यश्चशक्रोऽनन्तश्चपुत्रक ॥ आदित्यावसवोरुद्रादिक्पालाश्चदिगीश्वराः ॥
॥ ३२ ॥ युद्धायायान्तिसन्नद्धास्तिस्रःकोट्यश्चदेवताः ॥ नागाःकिम्पुरुषाश्चैवयक्षराक्षसगुह्यकाः ॥ ३३ ॥ भूताःप्रेताःपिशाचाश्चकु
ष्माण्डाब्रह्मराक्षसाः ॥ किराताश्चैवगन्धर्वासमुद्रपुलिनेऽधुना ॥ ३४ ॥ तारकामयसंग्रामेमध्यस्थोऽहंसुतैःसह ॥ देहितारांरणंकिंवात्य
जचन्द्रञ्चकामिनम् ॥ ३५ ॥ शुक्रउवाच ॥ आगच्छन्तुसुराःसर्वेसन्नद्धारणदुर्मदाः ॥ योत्स्येविनामहेशञ्चसर्वेषाञ्चगुरुंपरम् ॥ ३६॥ दै
त्याऊचुः ॥ उभयेषांगुरुःशम्भुर्मान्योवन्द्यश्चसर्वदा ॥ धर्मश्चसाक्षीसर्वेषांत्वमेवचपितामह ॥ ३७ ॥ अन्यांश्चतृणतुल्यांश्चनहिमन्याम
हेवयम् ॥ आगच्छन्तुचयोत्स्यामोव्रजब्रूहिजगद्गुरो ॥ ३८ ॥ कृपयागुरुपुत्रस्ययद्यायातिमहेश्वरः ॥ अग्रेनास्त्रंविधास्यामःपश्चाद्
योत्स्यामहेप्रभो ॥३९ ॥ ब्रह्मोवाच ॥ कालाग्निरुद्रःसंहर्त्ताविश्वस्यबलिनांवरः ॥ हेवत्सास्तेनसार्द्धञ्चकोवायुद्धंकरिष्यति ॥ ४० ॥
भद्रकालीजगन्माताखड्गखर्परधारिणी ॥ तयादुर्द्धर्षयासार्द्धंकोवायुद्धंकरिष्यति ॥ ४१॥ सासहस्रभुजादेवीमुण्डमालाविभूषणा ॥ योज
नायतवक्त्राचदशयोजनविस्तृता ॥ ४२॥ सप्ततालप्रमाणाश्चयस्यादन्ताभयानकाः॥ क्रोशप्रमाणजिह्वाचमहालोलाभयङ्करी ॥ ४३ ॥
अतीवरौद्राःसन्नद्धाभीमाःशङ्करकिङ्कराः ॥ अतिभीमाभैरवाश्चनन्दीचरणकर्कशः ॥ ४४ ॥ शिवस्यपार्षदाःसर्वेमहाबलपराक्रमाः ॥

वीरभद्रादयःशूराःशतसूर्य्यसमप्रभाः ॥४५॥ सहस्रमूर्ध्नःशेषस्यफणैकदेशकोणतः॥ विश्वंसर्षपतुल्यंचकोवायोद्धाचतत्समः ॥४६ ॥काला
ग्निरुद्रःसंहर्त्तायस्यशम्भोश्चकिङ्करः ॥ शूलिनस्त्रिपुरघ्नस्यज्वलतोब्रह्मतेजसा ॥ ४७ ॥ यस्यपाशुपतास्त्रेणदुर्निवार्य्येणपुत्रकाः ॥भस्मी
भूतंभवेद्विश्वंदैत्यानांचैवकाकथा ॥ ४८ ॥ यस्यशूलेनभिन्नश्चशंखचूडःप्रतापवान् ॥ सुदामापार्षदवरःकृष्णस्यपरमात्मनः ॥ ४९ ॥
त्रिकोटिसूर्य्यसदृशस्तेजस्वीपरमाद्भुतः ॥ राधाकवचकण्ठश्चसर्वदैत्यजनेश्वरः ॥ ५० ॥ मधुकैटभयोर्हन्ताहिरण्यकशिपोश्चयः ॥
सचविष्णुःसमायातिश्वेतद्वीपात्स्वयंप्रभुः ॥ ५१ ॥ इत्युक्त्वाजगतांधाताविररामचसंसदि ॥ प्रहस्योवाचप्रह्लादोदानवानामधी
श्वरः ॥ ५२ ॥ प्रह्लादउवाच ॥ नमस्तुभ्यंजगद्धातःसर्वेषांप्राक्तनेश्वर ॥ सर्वपूज्यसर्वनाथकिंवक्ष्यामितवाग्रतः ॥ ५३ ॥ हिर
ण्यकशिपोर्हन्तामधुकैटभयोश्चयः ॥ सकलायस्यकृष्णस्यपरिपूर्णतमस्यच ॥ ५४ ॥ सर्वान्तरात्मानन्तस्यचक्रंनामसुदर्शनम् ॥
अस्माकंलोकमस्मांश्चशश्वद्रक्षतिदुःसहम् ॥ ५५ ॥ ततोनबलवाञ्छम्भुर्नचपाशुपतंविधे ॥ नचकालीनशेषश्चनचरुद्रादयःसुराः॥
॥ ५६ ॥ यस्यलोमसुविश्वानिनिखिलानिजगत्पते ॥ सर्वाधारस्यचविभोःस्थूलात्स्थूलतरस्यच ॥ ५७ ॥ षोडशांशोभगवतः
सएवचमहान्विराट् ॥ अनन्तोनहितत्स्थूलोनकालीबृहतीततः ॥ ५८ ॥ आगच्छन्तुसुराःसर्वेयुद्धंकुर्वन्तुसाम्प्रतम् ॥ नबिभेमि
शरेभ्यश्चनचपाशुपताद्धरात् ॥ ५९ ॥ नमस्तस्मैभगवतेशिवायाशिवरूपिणे ॥ नमोऽनन्तायसाधुभ्योवैष्णवेभ्यःप्रजापते ॥ ६० ॥
श्रीकृष्णस्यप्रसादेननिर्भयोऽहंनिरामयः ॥ नमेस्वात्मबलंब्रह्मंस्तद्बलंयत्प्रभोर्बलम् ॥ ६१ ॥ स्वपापेनमृतस्तातोपुरावैविष्णुनि
न्दया ॥ निर्बन्धाच्छंखचूडश्चदर्पाच्चमधुकैटभौ ॥ ६२ ॥ त्रिपुरःकिङ्करोऽस्माकंवीरत्वेननगण्यते ॥ तथापिप्रेरितस्तेनसरथस्थो
महेश्वरः ॥ ६३ ॥ इत्युक्त्वादानवश्रेष्ठोविररामचसंसदि ॥ उवाचजगतांधातापुनरेवचनारद ॥ ६४॥ ब्रह्मोवाच॥ विनाशकारणंयुद्धमुभ
योर्दैत्यदेवयोः ॥ सुप्रीत्याचरणंवत्ससर्वमङ्गलकारणम् ॥ ६५ ॥ तारांभिक्षांदेहिमह्यंभिक्षुकायचब्रह्मणे ॥ विमुखेभिक्षुकेराजन्गृहस्थः
सर्वपापभाक् ॥ ६६ ॥ सनत्कुमारउवाच ॥ स्वकीर्तिरक्षराजेन्द्रासिंहस्त्वंसुरदैत्ययोः ॥ यस्यभिक्षुर्जगद्धातातस्यकीर्तिश्चकाकथा ॥

॥ ६७ ॥ सनातनउवाच ॥ नजितस्त्वंसुरेन्द्रैश्चब्रह्मेशानपुरोगमैः ॥ रक्षितःकृष्णचक्रेणवैष्णवःपुण्यवान्शुचिः ॥ ६८ ॥ सनन्दउवाच
॥ यस्येष्टदेवःसर्वात्माश्रीकृष्णःप्रकृतेःपरः ॥ गुरुश्चवैष्णवःशुक्रःसचकेनजितोमहान् ॥ ६९ ॥ सनकउवाच ॥ पुण्यवान्नजितःकेनाजि
तःपापीस्वपातकैः ॥ पुण्यदीपोननिर्वातिपाषण्डेनैववायुना ॥ ७० ॥ ऋषयऊचुः ॥ देहितारांमहाभागचन्द्रंप्राणाधिकंगुरोः ॥ स्वकी
र्तिरक्षसुचिरंप्रार्थयामःपुनःपुनः ॥ ७१ ॥ प्रह्लादउवाच ॥ स्थितेमदीश्वरेसाक्षान्नहिभृत्योविराजते ॥ कर्त्तारंब्रूहिमन्नाथंगुरुंशुक्रंसतांव
रम् ॥ ७२ ॥ शिष्याणामाधिपत्येचसाधूनांगुरुरीश्वरः ॥ गुरौसमर्पितंपूर्वंसर्वैश्वर्य्यंमुनीश्वरे ॥ ७३ ॥ वयंभृत्याश्चपोष्याश्चस्वगुरोः
परिचारकाः ॥ तेचशिष्याःकुशलिनोगुर्वाज्ञांपालयन्तिये ॥ ७४ ॥ प्रह्लादस्यवचःश्रुत्वाचकारप्रार्थनांकविम् ॥ ददौशुक्रश्चतारांतांच
न्द्रश्चमलिनंमुने ॥७५॥ दत्त्वातारांविधुंशुक्रःप्रणनामविधेःपदे ॥ नमस्कृत्यमुनिभ्यश्चप्रणतःस्वपुरंययौ॥७६॥प्रह्लादःसगणोभक्त्यानम
स्कृत्यविधेःपदे ॥ प्रत्येकश्चमुनिगणान्प्रणतःस्वगृहंययौ ॥ ७७॥ब्रह्मादर्शतारांचप्रणतांस्वपदेसतीम् ॥ लज्जयानम्रवक्त्रांचरुदतींगु
र्विणींमुने ॥ ७८ ॥ चन्द्रश्चप्रणतंधाताक्रोडेसंस्थाप्यमायया ॥ उवाचमलिनांतारांकातरांचकृपामयः ॥ ७९ ॥ तारेत्यजभयंमातर्भयं
किंतेमयिस्थिते ॥ सौभाग्ययुक्तास्वपतौभविष्यासिवरेणमे ॥ ८० ॥ दुर्बलाबलिनाग्रस्तानिष्कामानच्युताभवेत् ॥ प्रायश्चित्तेनशुद्धासा
नस्त्रीजारेणदुष्यति ॥ ८१ ॥ सकामाकामतोजारंभजतेस्वसुखेनच ॥ प्रायश्चित्तान्नशुद्धासास्वामिनापरिवर्जिता ॥ ८२ ॥ कुम्भीपा
केपच्यतेसायावच्चन्द्रदिवाकरौ ॥ अन्नंविष्ठाजलंमूत्रंस्पर्शनंसर्वपापदम् ॥ ८३ ॥ पापीयस्याश्चतस्याश्चसाधुभिःपरिवर्जितम् ॥ कस्यग
र्भंवदशुभेगच्छवत्सेगुरोर्गृहम् ॥ ८४ ॥ त्यजलज्जांमहाभागेसर्वंचप्राक्तनाद्भवेत् ॥ ब्रह्मणोवचनंश्रुत्वातमुवाचसतीतदा ॥ ८५ ॥ चन्द्र
स्यगर्भंहेतातबिभर्मिदैवयोगतः ॥ सर्वेमेसाक्षिणःसन्तिदुर्बलायाःप्रजापते ॥ ८६ ॥ यदाजग्राहचन्द्रोमांदयाहीनश्चदुर्मतिः ॥ इत्युक्त्वा
तारकादेवीसुषावकनकप्रभम् ॥ ८७ ॥ कुमारंसुन्दरंतत्रज्वलन्तंब्रह्मतेजसा ॥ गृहीत्वातनयंचन्द्रोनत्वाब्रह्माणमीश्वरम् ॥ ८८ ॥ जगा
मसस्वभवनंब्रह्मासिन्धुतटंययौ ॥ साध्वींतारांचगुरवेदेवेभ्योऽप्यभयंददौ ॥ ८९ ॥ आशिषंशम्भुधर्माभ्यांब्रह्मलोकंययौविधिः ॥ देवा

ययुःस्वभवनंस्वगृहश्चबृहस्पतिः ॥ ९० ॥ भावानुरक्तवनितांसंप्राप्यहृष्टमानसः ॥ तारकागर्भसंभूतःसएवचबुधःस्वयम् ॥ ९१ ॥ तेज
स्वीसद्ग्रहोब्रह्मंश्चन्द्रस्यतनयोमहान् ॥ सएवनन्दनवनेचित्रांसंप्राप्यनिर्जने ॥ ९२ ॥ घृताच्यागर्भसंभूतांकूबेरस्यचरेतसा ॥ दृष्ट्वाच
निर्जनेरम्यांकन्यांकमललोचनाम् ॥ ९३ ॥ अतीवयौवनस्थांचबालांद्वादशवार्षिकीम् ॥ गान्धर्वेणविवाहेनतांजग्राहविधोःसुतः॥९४॥
तस्यामतीवरहसिवीर्य्याधानंचकारसः ॥ बभूवराजाचित्रायांचैत्रश्चमण्डलेश्वरः ॥ ९५ ॥ सप्तद्वीपवतींपृथ्वींप्रशास्तिधार्मिकोबली ॥
शतनद्योघृतानांचदध्नोनद्यःशतानिच ॥ ९६ ॥ शतानिनद्योदुग्धानांमधुनद्यश्चषोडश ॥ दशनद्यश्चतैलानांशर्करालक्षराशयः ॥ ९७॥
मिष्टान्नानांस्वस्तिकानांलक्षराशिश्चनित्यशः ॥ पञ्चकोटिगवांमांसंसापूपंस्वान्नमेवच ॥ ९८ ॥ एतेषांचनदीराशिभुञ्जतेब्राह्मणामुने ॥
गवांलक्षञ्चरत्नानांमणीनांलक्षमेवच ॥ ९९ ॥ शतलक्षंसुवर्णानांलक्षञ्चसूक्ष्मवाससाम् ॥ रत्नानांभूषणंपात्रमतीवसुमनोहरम् ॥ १०० ॥
ददौद्विजातयेराजानित्यञ्चजीवनावधि ॥ तस्यचैत्रस्यपुत्रश्चराजाधिरथएवच ॥ १०१ ॥ तस्यपुत्रश्चसुरथश्चक्रवर्तीबृहच्छ्रवाः ॥ महा
ज्ञानंचसंप्राप्यमेधसान्मुनिसत्तमात् ॥ १०२ ॥ भेजेपुराविष्णुमायांपुण्यक्षेत्रेचभारते ॥ शरत्कालेमहापूजांचकारससरित्तटे ॥ १०३ ॥
वैश्येनसार्धसमहान्ज्ञानिनांमुनिसत्तम ॥ राजाकलिङ्गदेशस्याविराधश्चविशांवरः ॥ १०४ ॥ तस्यपुत्रोमहायोगद्रुमिणेज्ञानिनांवरः ॥
द्रुमिणोवैष्णवःप्राज्ञःपुष्करेदुष्करंतपः ॥ १०५ ॥ कृत्वासमाधिंसंप्रापज्ञानिनंवैष्णवाग्रणीम् ॥ पुत्रदारैर्निरस्तश्चधनलोभाद्दुरात्मभिः ॥
॥ १०६ ॥ सचकोटिसुवर्णञ्चनित्यंदत्वाजलंपपौ ॥ मुक्तिंसंप्रापसंसेव्यविष्णुमायांसनातनीम् ॥ १०७ ॥ राजालेभेमनुत्वञ्चराज्यंनिष्क
ण्टकंमुने ॥ उवाचमधुरंवाक्यंधातात्रिजगतांपतिः ॥ १०८ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डेदुर्गोपाख्या
नेएकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ नारदउवाच ॥ कथंराजामहाज्ञानंसंप्रापमुनिसत्तमात् ॥ वैश्योमुक्तिंमेधसाच्चतन्मेव्याख्यातुमर्हसि ॥ १ ॥ श्रीनारायणउवाच ॥

१ । मासमितिपाठ ।

ध्रुवस्यपौत्रोबलवान्नन्दिरुत्कलनन्दनः ॥ स्वायम्भुवमनोर्वंशःसत्यवादीजितेन्द्रियः ॥ २ ॥ अक्षौहिणीनांशतकंगृहीत्वासैन्यमेवच ॥
कोलाश्चवेष्टयामाससुरथस्यमहामतेः ॥ ३ ॥ युद्धंबभूवनियतंपूर्णमब्दञ्चनारद ॥ चिरजीवीवैष्णवश्चजिगायसुरथंनृपः ॥ ४ ॥ एका
कीसुरथोभीतोनन्दिनाचबहिष्कृतः ॥ निशायांहयमारुह्यजगामगहनंवनम् ॥ ५ ॥ ददर्शतत्रवैश्यश्चपुष्पभद्रानदीतटे ॥ तयोर्बभूवसंप्री
तिःकृतबान्धवयोर्मुने ॥ ६ ॥ वैश्येनसार्द्धंनृपतिर्जगाममेधसाश्रमम् ॥ पुष्करंदुष्करंपुण्यक्षेत्रञ्चभारतेसताम् ॥ ७ ॥ ददर्शतत्रनृपति
र्मुनिंतंतप्ततेजसम् ॥ शिष्येभ्यश्चप्रवोचन्तंब्रह्मतत्वंसुदुर्लभम् ॥ ८ ॥ राजाननामवैश्यश्चशिरसामुनिपुङ्गवम् ॥मुनिस्तौपूजयामासददौ
ताभ्यांशुभाशिषम् ॥ ९ ॥ प्रश्नंचकारकुशलंजातिनामपृथक्पृथक्॥ ददौप्रत्युत्तरंराजाक्रमेणमुनिपुङ्गवम् ॥ १० ॥सुरथउवाच॥ राजाहंऽसुर
थोब्रह्मंश्चैत्रवंशसमुद्भवः ॥ बहिर्भूतःस्वराज्याच्चनन्दिनाबलिनाधुना ॥ ११ ॥ किमुपायंकरिष्यामिकथंराज्यंभवेन्मम॥ तन्माब्रूहिमहाभा
गत्वय्येवशरणागतम् ॥ १२ ॥ अयंवैश्यःसमाधिश्चस्वगृहाच्चबहिष्कृतः ॥ पुत्रैःकलत्रैर्दैवेनधनलोभेनधार्मिकः ॥ १३ ॥ ब्राह्मणायददौ
नित्यंरत्नकोटिंदिनेदिने ॥ निषिद्धमानःपुत्रैश्चकलत्रैर्बान्धवैरयम् ॥ १४ ॥ कोपान्निराकृतस्तैश्चपुनरन्वेषितःशुचा॥ अयंगृहञ्चनययौवि
रक्तोज्ञानवान्शुचिः ॥ १५ ॥ पुत्राश्चपितृशोकेनगृहंत्यक्त्वाययुर्वनम् ॥ दत्त्वाधनानिविप्रेभ्योविरक्ताःसर्वकर्मसु ॥ १६ ॥ सुदुर्लभंहरेर्दा
स्यंवैश्यस्यास्यचवाञ्छितम् ॥ कथंप्राप्नोतिनिष्कामस्तन्मेव्याख्यातुमर्हसि॥ १७ ॥श्रीवेधसउवाच॥करोतिमाययाच्छन्नंविष्णुमायादुर
त्यया ॥ निर्गुणस्यचकृष्णस्यत्रिगुणाविश्वमाज्ञया ॥ १८ ॥ कृपांकरोतियेषांसाधार्मिणांचकृपामयी ॥ तेभ्योददातिकृपयाकृष्णभक्तिं
सुदुर्लभाम् ॥ १९ ॥ येषांमायाविनांमायानकरोतिकृपांनृप ॥ माययातान्निबध्नातिमोहजालेनदुर्गतान् ॥ २० ॥ नश्वरेनित्यसंसारेभ्रमेण
बर्बरासदा ॥ कुर्वन्तिनित्यबुद्धिञ्चविहायपरमेश्वरम् ॥ २१ ॥ देवमन्यंनिषेवन्तेतन्मन्त्रञ्चजपन्तिच ॥ मिथ्याकिञ्चिन्निमित्तञ्चकृत्वाम
नसिलोभतः ॥ २२ ॥ हरेःकलाःदेवतांश्चनिषेव्यजन्मसप्तच॥तदाप्रकृत्याकृपयासेवन्तेप्रकृतिंतदा ॥ २३ ॥ निषेव्युविष्णुमायांचसप्तजन्म

१ सर्वदाइतिपाठः ।

कृपामयीम् ॥ शिवेभक्तिंलभन्तेतेज्ञानानन्देसनातने ॥ २४ ॥ ज्ञानाधिष्ठातृदेवञ्चनिषेव्यशङ्करंहरेः ॥ अचिराद्विष्णुभक्तिंचप्राप्नुवन्तिम
हेश्वरात् ॥ २५ ॥ सेवन्तेसगुणंसत्वंविष्णुंविषयिणंतदा॥ सत्वज्ञानाच्चपश्यन्तिज्ञानंचनिर्म्मलंनराः॥२६॥निषेव्यसगुणंविष्णुंसात्विकावै
ष्णवानराः ॥ लभन्तेनिर्गुणेभक्तिंश्रीकृष्णेप्रकृतेःपरे ॥ २७॥ कुर्वन्तिग्रहणंसन्तोमन्त्रंतस्यनिरामयम् ॥ निषेव्यनिर्गुणंदेवंतेभवन्तिच
निर्गुणाः ॥ २८ ॥ असंख्यब्रह्मणःपातंतेचपश्यन्तिवैष्णवाः ॥ दास्यंकुर्वन्तिसततंगोलोकेचनिरामये ॥२९ ॥ कृष्णभक्तात्कृष्णमन्त्रंयो
गृह्णातिनरोत्तमः ॥ पुरुषाणांसहस्रंचस्वपितॄणांसमुद्धरेत् ॥ ३० ॥ मातामहानांपुरुषंसहस्रंमातरंतथा ॥ दासादिकंसमुद्धृत्यगोलोकंसप्र
यातिच ॥ ३१ ॥ भवार्णवेमहाघोरेकर्णधारस्वरूपिणि ॥ पारंकरोतिदुर्गातान्कृष्णभक्त्याचनौकया ॥३२॥ स्वकर्म्मबन्धनंछेत्तुंवैष्णवा
नांचवैष्णवी॥तीक्ष्णशस्त्रस्वरूपासाकृष्णस्यपरमात्मनः ॥ ३३ ॥ विवेचनाचावरणीशक्तेःशक्तिर्द्विधानृप ॥पूर्वंददातिभक्तायचेतरायपरां
परा ॥ ३४ ॥ सत्यस्वरूपःश्रीकृष्णस्तस्मात्सर्वंचनश्वरम् ॥ बुद्धिर्विवेचनेत्येवंवैष्णवानांसनातनी ॥ ३५ ॥ नित्यरूपाममेयंश्रीरिति
चावरणीचधीः ॥अवैष्णवानामसतांकर्म्मभोगभुजामहो ॥ ३६ ॥ अहंप्रचेतसःपुत्रःपौत्रश्चब्रह्मणोनृप ॥ भजामिकृष्णमात्मानंज्ञानंसंप्रा
प्यशङ्करात् ॥ ३७॥ गच्छराजन्नदीतीरंभजदुर्गांसनातनीम् ॥ बुद्धिमावरणींतुभ्यंदेवीदास्यतिकामिने ॥ ३८ ॥ निष्कामायचवैश्या
यवैष्णवायचवैष्णवी ॥ बुद्धिंविवेचनांशुद्धांदास्यत्येवकृपामयी ॥ ३९ ॥ इत्युक्त्वाचमुनिश्रेष्ठोददौताभ्यांकृपानिधिः ॥ पूजाविधानं
दुर्गायाःस्तोत्रंचकवचंमनुम् ॥ ४० ॥ वैश्योमुक्तिंचसंप्रापतांनिषेव्यकृपामयीम् ॥ राजाराज्यंमनुत्वंचपरमैश्वर्य्यमीप्सितम्॥४१ ॥
इत्येवंकथितंसर्वंदुर्गोपाख्यानमुत्तमम् ॥ सुखदंमोक्षदंसारंकिंभूयःश्रोतुमिच्छसि ॥ ४२ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवा
देप्रकृतिखण्डेदुर्गोपाख्यानेसुरथमेधसंवादेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ छ ॥ ॥छ॥

नारदउवाच ॥ नारायणमहाभागवदवेदविदांवर ॥ राजाकेनप्रकारेणसिषेवेप्रकृतिंपराम् ॥ १ ॥ समाधिर्नामवैश्योवानिष्कामंनिर्गुणं

१ सतामपीतिपाठः ।

विभुम् ॥ भेजेकेनप्रकारेणप्रकृतेरुपदेशतः ॥ २ ॥ किंवापूजाविधानञ्चध्यानंवामनुमेवच ॥ किंस्तोत्रंकवचंकिंवाददौराज्ञेमहामुनिः ॥
॥ ३ ॥ तस्मैवैश्यायप्रकृतिःकिंवाज्ञानंददौपरम् ॥ साक्षाद्बभूवसहसाकेनवाप्रकृतिस्तयोः ॥ ४ ॥ ज्ञानंसंप्राप्यवैश्यश्चकिंपदंप्रापदुर्ल
भम् ॥ गतिर्बभूवराज्ञश्चकावाताञ्चशृणोम्यहम् ॥५॥ श्रीनारायणउवाच॥ राजामन्त्रञ्चसंप्राप्यवैश्यश्चमेधसान्मुने॥स्तोत्रञ्चकवचंदेव्या
ध्यानञ्चैवपुरस्क्रियाम् ॥ जजापपरमंमन्त्रंराजावैश्यश्चपुष्करे ॥ ६ ॥ स्नात्वात्रिकालंवर्षञ्चततःशुद्धोबभूवसः ॥ साक्षाद्बभूवतत्रैवमूलप्र
कृतिरीश्वरी ॥ ७ ॥ राज्ञेददौराज्यवरंमनुत्वंवाञ्छितंसुखम् ॥ ज्ञानंनिगूढंवैश्यायददौचातिसुदुर्लभम् ॥ ८ ॥ यद्दत्तंशूलिनेपूर्वंकृष्णेन
परमात्मना ॥ निराहारमतिक्लिष्टंदृष्ट्वावैश्यंकृपामयी ॥ ९ ॥ रुरोदकृत्वाक्रोडेतमचेष्टंश्वासवर्जितम् ॥ चेतनांकुरुभोवत्सेत्युच्चार्य्यचपु
नःपुनः ॥ १० ॥ चेतनाञ्चददौतस्मैस्वयंचैतन्यरूपिणी ॥ संप्राप्यचेतनांवैश्योरुरोदप्रकृतेःपुरः ॥ ११ ॥ तमुवाचप्रसन्नासाकृपयाऽ
तिकृपामयी ॥ १२ ॥ श्रीप्रकृतिरुवाच ॥ वरंवृणुष्वहेवत्सयत्तेमनसिवर्त्तते ॥ ब्रह्मत्वममरत्वंवाततोवातिसुदुर्लभम् ॥ १३ ॥ इन्द्रत्वंवा
मनुत्वंवासर्वसिद्धित्वमेवच ॥ तुच्छंतुभ्यंनदास्यामिनश्वरंबालवञ्चनम् ॥ १४ ॥ वैश्यउवाच ॥ ब्रह्मत्वममरत्वंवामातर्मेनहिवाञ्छित
म् ॥ ततोऽतिदुर्लभंकिंवानजानेतदभीप्सितम् ॥१५॥ त्वय्येवशरणापन्नोदेहियद्वाञ्छितंतव॥अनश्वरंसर्वसारंवरंमेदातुमर्हसि ॥१६॥
प्रकृतिरुवाच॥अदेयंनास्तिमेतुभ्यंदास्यामिममवाञ्छितम् ॥ यतोयास्यसिगोलोकंपदमेवसुदुर्लभम्॥१७॥सर्वसारञ्चयज्ज्ञानंसुरर्षीणां
सुदुर्लभम् ॥ तद्गृह्यतांमहाभागगच्छवत्सहरेःपदम् ॥ १८॥ स्मरणंवन्दनंध्यानमर्च्चनंगुणकीर्त्तनम् ॥ श्रवणंभावनंसेवासर्वंकृष्णेनिवेद
नम् ॥ १९ ॥ एतदेववैष्णवानांनवधाभक्तिलक्षणम् ॥ जन्ममृत्युजराव्याधियमताडनखण्डनम् ॥ २० ॥ आयुर्हरतिलोकानांरविरेवहि
सन्ततम् ॥ नवधाभक्तिहीनानामसतांपापिनामपि ॥२१ ॥ भक्तास्तद्गतचित्ताश्चवैष्णवाश्चिरजीविनः ॥ जीवन्मुक्ताश्चनिष्पापाज
न्मादिपरिवर्जिताः ॥ २२ ॥ शिवःशेषश्चधर्मश्चब्रह्माविष्णुर्महान्विराट् ॥ सनत्कुमारःकपिलःसनकश्चसनन्दनः ॥ २३ ॥ वोढुःपञ्चशि
खोदक्षोनारदश्चसनातनः ॥ भृगुर्मरीचिर्दुर्वासाःकश्यपःपुलहोऽङ्गिराः ॥२४ ॥ मेधसोलोमशःशुक्रोवसिष्ठःक्रतुरेवच ॥ बृहस्पतिःकर्दम

श्चशक्तिरत्रिःपराशरः ॥ २५ ॥ मार्कण्डेयोबालिश्चैवप्रह्लादश्चगणेश्वरः ॥ यमःसूर्य्यश्चवरुणोवायुश्चन्द्रोहुताशनः ॥ २६ ॥ अकूपारउ
लूकश्चनाडीजंघश्चवायुजः ॥ नरनारायणौकूर्म्मइन्द्रद्युम्नोविभीषणः ॥ २७ ॥ नवधाभक्तियुक्ताश्चकृष्णस्यपरमात्मनः ॥ एतेमहान्तोध
र्मिष्ठाभक्तानांप्रवरास्तथा ॥ २८ ॥ येतद्भक्तास्तेतदंशाजीवन्मुक्ताश्चसन्ततम् ॥ पापापहारास्तीर्थानांपृथिव्याश्चविशाम्पते ॥ २९ ॥
ऊर्ध्वेचसप्तस्वर्गाश्चसप्तद्वीपावसुन्धरा ॥ अधःसप्तचपातालाएतद्ब्रह्माण्डमेवच ॥ ३० ॥ एवंविधानांविश्वानांसंख्यानास्त्येवपुत्रक ॥
एवञ्चप्रतिविश्वेषुब्रह्मविष्णुशिवादयः ॥ ३१ ॥ देवादेवर्षयश्चैवमनवोमानवादयः ॥ सर्वाश्रमाश्चसर्वत्रसन्तिबद्धाश्चमायया ॥ ३२ ॥
महद्विष्णोर्लोमकूपेसन्तिविश्वानियस्यच ॥ सषोडशांशःकृष्णस्यचात्मनश्चमहाविराट् ॥ ३३ ॥ भजसत्यंपरंब्रह्मनित्यंनिर्गुणमच्युतम्
॥ प्रकृतेःपरमीशानंकृष्णमात्मानमीप्सितम् ॥ ३४ ॥ निरीहञ्चनिराकारंनिर्विकारंनिरञ्जनम् ॥ निष्कामंनिर्विरोधंचनित्यानन्दंसनात
नम् ॥ ३५ ॥ स्वेच्छामयंसर्वरूपंभक्तानुग्रहविग्रहम् ॥ तेजःस्वरूपंपरमंदातारंसर्वसम्पदाम् ॥ ३६ ॥ ध्यानासाध्यंदुराराध्यंशिवादी
नांचयोगिनाम् ॥ सर्वेश्वरंसर्वपूज्यंसर्वस्यसर्वकामदम् ॥ ३७ ॥ सर्वाधारंचसर्वज्ञंसर्वानन्दकरंपरम् ॥ सर्वधर्मप्रदंसर्वंसर्वज्ञंप्राणरूपिणम्
॥ ३८ ॥ सर्वधर्मस्वरूपंचसर्वकारणकारणम् ॥ सुखदंमोक्षदंसारंपररूपंचभक्तिदम् ॥ ३९ ॥ दास्यदंधर्मदंचैवसर्वसिद्धिप्रदंसताम् ॥
सर्वंतदतिरिक्तंचनश्वरंकृत्रिमंसदा ॥ ४० ॥ परात्परतरंशुद्धंपरिपूर्णतमंशिवम् ॥ यथासुखंगच्छवत्सभगवन्तमधोक्षजम् ॥ ४१ ॥
कृष्णेतिद्व्यक्षरंमन्त्रंगृहाणकृष्णदास्यदम् ॥ पुष्करंदुष्करंगत्वादशलक्षमिमंजप ॥ ४२ ॥ दशलक्षजपेनैवमन्त्रसिद्धिर्भवेत्तव ॥ इत्यु
क्त्वासाभगवतीतत्रैवान्तरधीयत ॥ ४३ ॥ वैश्योनत्वाचतांभक्त्याजगामपुष्करंमुने ॥ पुष्करेदुस्तरंतत्वासंप्रापकृष्णमीश्वरम् ॥ भग
वत्याःप्रसादेनकृष्णदासोबभूवसः ॥ ४४ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डेदुर्गोपाख्यानेसुरथसमाधिमेधस
संवादेप्रकृतिवैश्यसंवादकथनंनामत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥
॥ नारायणउवाच ॥ राजायेनक्रमेणैवभेजेतांप्रकृतिंपराम् ॥ तच्छ्रूयतांमहाभागवेदोक्तंक्रममेवच ॥ १ ॥ स्नात्वाचम्यमहाराजःकृत्वान्या

सत्रयंतदा ॥ स्वकराङ्गाङ्गमन्त्राणांभूतशुद्धिंचकारसः ॥ २ ॥ प्राणायामंततःकृत्वाकृत्वाचशंखशोधनम् ॥ ध्यात्वादेवींश्चमृन्मय्यांचका
रावाहनंतदा ॥ ३ ॥ पुनर्ध्यात्वाचभक्त्याचपूजयामासभक्तितः ॥ देव्याश्चदक्षिणेभागेसंस्थाप्यकमलालयाम् ॥ ४ ॥ संपूज्यभक्तिभावे
नभक्त्यापरमधार्मिकः ॥ देवषट्कंसमावाह्यदेव्याश्चपुरतोघटे ॥ ५ ॥ भक्त्याचपूजयामासविधिपूर्वंचनारद ॥ गणेशञ्चदिनेशंचवह्निंवि
ष्णुंशिवंशिवाम् ॥ ६ ॥ देवषट्कंचसंपूज्यनमस्कृत्यविचक्षणः ॥ तदाध्यायेन्महादेवींध्यानेनानेनभक्तितः ॥ ७ ॥ ध्यानंचसामवेदोक्तं
परंकल्पतरुंमुने ॥ ध्यायेन्नित्यंमहादेवींमूलप्रकृतिरीश्वरीम् ॥ ८ ॥ ब्रह्मविष्णुशिवादीनांपूज्यांवन्द्यांसनातनीम् ॥ नारायणींविष्णुमा
यांवैष्णवींविष्णुभक्तिदाम् ॥ ९ ॥ सर्वस्वरूपांसर्वेषांसर्वधारांपरात्पराम् ॥ सर्वविद्यासर्वमन्त्रसर्वशक्तिस्वरूपिणीम् ॥ १० ॥ सगुणां
निर्गुणांसत्यांवरांस्वेच्छामयींसतीम् ॥ महाविष्णोश्चजननींकृष्णस्यार्द्धाङ्गसम्भवाम् ॥ ११ ॥ कृष्णप्रियांकृष्णशक्तिंकृष्णबुद्ध्यधिदेव
ताम् ॥ कृष्णस्तुतांकृष्णपूज्यांकृष्णवन्द्यांकृपामयीम् ॥ १२ ॥ तप्तकांचनवर्णाभांकोटिसूर्य्यसमप्रभाम् ॥ ईषद्धास्यप्रसन्नास्यांभक्ता
नुग्रहकातराम् ॥ १३ ॥ दुर्गांशतभुजांदेवींमहद्दुर्गतिनाशिनीम् ॥ त्रिलोचनप्रियांसाध्वींत्रिगुणांचत्रिलोचनाम् ॥ १४ ॥ त्रिलोचन
प्राणरूपांशुद्धार्द्धचन्द्रशेखराम् ॥ बिभ्रतींकबरीभारंमालतीमाल्यमण्डितम् ॥ १५ ॥ वर्त्तुलंवामवक्रश्चशम्भोर्मानसमोहिनीम् ॥ रत्नकु
ण्डलयुग्मेनगण्डस्थलविराजिताम् ॥ १६ ॥ नासादक्षिणभागेनबिभ्रतींगजमौक्तिकम् ॥ अमूल्यरत्नंबहुलंबिभ्रतींश्रवणोपरि ॥ १७ ॥
मुक्तापंक्तिविनिन्द्यैकदन्तपंक्तिसुशोभिताम् ॥ पक्वविम्बाधरोष्ठींचसुप्रसन्नांसुमङ्गलाम् ॥ १८ ॥ चित्रपत्रावलीरम्यकपोलयुगलोज्ज्वला
म् ॥ रत्नकेयूरवलयरत्नमञ्जीररञ्जिताम् ॥ १९ ॥ रत्नकङ्कणभूषाढ्यांरत्नपाशकशोभिताम् ॥ रत्नांगुलीयनिकरैःकराङ्गुलिचयोज्ज्व
लाम् ॥ २० ॥ पदाङ्गुलिनखासक्तालक्तरेखासुशोभनाम् ॥ वन्हिशुद्धांशुकाधानांगन्धचन्दनचर्च्चिताम् ॥ २१ ॥ बिभ्रतींस्तनयुग्मश्च
कस्तूरीबिन्दुशोभिताम् ॥ सर्वरूपगुणवतींगजेन्द्रमन्दगामिनीम् ॥ २२ ॥ अतीवकान्तांशान्तांचानितान्तांयोगसिद्धिषु ॥ विधातुश्च

१ यावकइतिपाठः ।

विधात्रींचसर्वधात्रीञ्चशङ्करीम् ॥ २३ ॥ शरत्पार्वणचन्द्रास्यामतीवसुमनोहराम् ॥ कस्तुरीबिन्दुभिःसार्द्धमधश्चन्दनबिन्दुना ॥ २४ ॥ सिन्दूरबिन्दुनाशश्वद्भालमध्यस्थलोज्ज्वलाम् ॥ शरन्मध्यान्हकमलप्रभामोचनलोचनाम् ॥ २५ ॥ चारुकज्जलरेखाभ्यांसर्वतश्चसमुज्ज्वलाम् ॥ कोटिकन्दर्पलावण्यलीलानिन्दितविग्रहाम् ॥ २६ ॥ रत्नसिंहासनस्थांचसद्रत्नमुकुटोज्ज्वलाम् ॥ सृष्टौस्रष्टुःशिल्परूपांदयांपातुश्चपालने ॥ २७ ॥ संहारकालेसंहर्त्तुःपरांसंहाररूपिणीम् ॥ निशुम्भशुम्भमथिनींमहिषासुरमर्दिनीम् ॥ २८ ॥ पुरात्रिपुरयुद्धेचसंस्तुतांत्रिपुरारिणा ॥ मधुकैटभयोर्युद्धेविष्णुशक्तिस्वरूपिणीम् ॥ २९ ॥ सर्वदैत्यनिहन्त्रींचरक्तबीजविनाशिनीम् ॥ नृसिंहशक्तिरूपांचहिरण्यकशिपोर्वधे ॥ ३० ॥ वराहशक्तिंवाराहेहिरण्याक्षवधेतथा ॥ परब्रह्मस्वरूपांचसर्वशक्तिंसदाभजे ॥ ३१ ॥ इतिध्यात्वास्वशिरसिपुष्पंदत्वाविचक्षणः ॥ पुनर्ध्यात्वाचैवभक्त्याकुर्य्यादावाहनन्ततः ॥ ३२ ॥ प्रकृतेःप्रतिमांधृत्वामन्त्रमेवंपठेन्नरः ॥ जीवन्यासंततःकुर्य्यान्मनुनानेनयत्नतः ॥ ३३ ॥ एह्येहिभगवत्यम्बशिवलोकात्सनातनि ॥ गृहाणममपूजांचशारदीयांसुरेश्वरि ॥ ३४ ॥ इहागच्छजगत्पूज्येतिष्ठतिष्ठमहेश्वरि ॥ हेमातरस्यामर्चायांसन्निरुद्धाभवाम्बिके ॥ ३५ ॥ इहागच्छन्तुत्वत्प्राणाश्चाधप्राणैःसहाच्युते ॥ इहागच्छन्तुत्वरितंतवैवसर्वशक्तयः ॥ ३६ ॥ ओंह्रींश्रींक्लींचदुर्गायैवन्हिजायान्तमेवच ॥ समुच्चार्य्योरसिप्राणाःसन्तिष्ठन्तुसदाशिवे ॥ ३७ ॥ सर्वेन्द्रियाधिदेवास्तेइहागच्छन्तुचण्डिके ॥ इहागच्छन्तुतेशक्त्यइहागच्छन्तुईश्वराः ॥ ३८ ॥ सइहागच्छेत्यावाह्यपरिहारंकरोतिच ॥ मन्त्रेणानेनविप्रेन्द्रतच्छृणुष्वसमाहितः ॥ ३९ ॥ स्वागतंभगवत्यम्बशिवलोकाच्छिवप्रिये ॥ प्रसादंकुरुमांभद्रेभद्रकालिनमोऽस्तुते ॥ ४० ॥ धन्योऽहंकृतकृत्योऽहंसफलंजीवनंमम ॥ आगतासियतोदुर्गेमाहेश्वरिमदालयम् ॥ ४१ ॥ अद्यमेसफलंजन्मसार्थकंजीवनंमम पूजयामियतोदुर्गांपुण्यक्षेत्रेचभारते ॥ ४२ ॥ भारतेभर्वतीपूज्यांदुर्गांयःपूजयेद्बुधः ॥ सोऽन्तेयातिचगोलोकंपरमैश्वर्य्यवानिह ॥ ४३ ॥ कृत्वाचवैष्णवीपूजांविष्णुलोकंव्रजेत्सुधीः ॥ माहेश्वरीञ्चसंपूज्यशिवलोकंचगच्छति ॥ ४४ ॥ सात्विकीराजसीचैवत्रिधापूजाचतामसी ॥

१ सृष्टिरूपामितिपाठः । २ भारतीमितिपाठः ।

भगवत्याश्चवेदोक्ताचोत्तमामध्यमाधमा ॥ ४९ ॥ सात्विकीवैष्णवानांचशाक्तादीनांचराजसी ॥ अदीक्षितानामसतामन्यानांतामसी
स्मृता ॥ ४६ ॥ जीवहत्याविहीनायावरापूजाचवैष्णवी ॥ वैष्णवायान्तिगोलोकंवैष्णवीवरदानतः॥४७॥माहेश्वरीराजसीचबलिदानसम
न्विताः ॥ शाक्तादयोराजसाश्चकैलासंयान्तितेतया॥४८॥ किरातानरकंयान्तितामस्यापूजयातया॥त्वमेवजगतांमातश्चतुर्वर्गफलप्रदः
॥ ४९ ॥ सर्वशक्तिस्वरूपाचकृष्णस्यपरमात्मनः ॥ जन्ममृत्युजराव्याधिहरात्वञ्चपरात्परा ॥ ५० ॥ सुखदामोक्षदाभद्राकृष्णभक्तिप्र
दासदा ॥ नारायणिमहामायेदुर्गेदुर्गतिनाशिनि ॥ ५१ ॥ दुर्गेतिस्मृतिमात्रेणयातिदुर्गंनृणामिह॥ इतिकृत्वापरीहारंदेव्यावामेचसाधक
॥ ५२ ॥ त्रिपद्याउपरिष्टात्तुकुर्य्याच्चशंखरक्षणम् ॥ तत्रदत्वाजलंपूर्णंदूर्वांपुष्पञ्चचन्दनम् ॥ ५३ ॥ धृत्वादक्षिणहस्तेनमन्त्रमेवंपठेन्नरः
॥ पुण्यस्त्वंशंखपुण्यानांमङ्गलानांचमङ्गलम् ॥ प्रभवःशंखचूडात्वंपुराकल्पेपवित्रकः ॥ ५४ ॥ ततोऽर्घ्यपात्रंसंस्थाप्यविधिनानेनपण्डि
तः ॥ दत्वासंपूजयेद्देवीमुपचाराणिषोडश ॥ ५५ ॥ त्रिकोणमण्डलंकृत्वासजलेनकुशेनच ॥ कूर्मंशेषंधरित्रीञ्चसंपूज्यतत्रधार्मिकः ॥
॥ ५६ ॥ त्रिपदींस्थापयेत्तत्रत्रिपद्यांशंखमेवच ॥ शंखेत्रिभागतोयञ्चदत्वासंपूजयेत्ततः ॥ ५७ ॥ गङ्गेचयमुनेचैवगोदावरिसरस्वती ॥
नर्म्मदेसिन्धुकावेरिचन्द्रभागेचकौशिकि ॥ ५८ ॥ स्वर्णरेखेकनखलेपारिभद्रेचगण्डकि ॥ श्वेतगङ्गेचन्द्ररेखेपम्पेचम्पेचगोमति ॥
॥ ५९ ॥ पद्मावतित्रिपर्णाशेविपाशेविरजेप्रभे ॥ शतद्रुदेचेलगङ्गेजलेऽस्मिन्सन्निधिंकुरु॥ ६० ॥ वह्निंसूर्य्यंचचन्द्रञ्चविष्णुंचवरुणंशिवम्
॥ पूजयेत्तत्रतोयेचतुलस्याचन्दनेनच ॥ नैवेद्यानिचसर्वाणिप्रोक्षयेत्तज्जलेनच ॥ ६१ ॥ ततोदद्याच्चप्रत्येकमुपचाराणिषोडश ॥ आसनं
वसनंपाद्यंस्नानीयमनुलेपनम् ॥ ६२ ॥ मधुपर्कंगन्धमर्घ्यंपुष्पंनैवेद्यमीप्सितम् ॥ पुनराचमनीयञ्चताम्बूलंरत्नभूषणम् ॥ ६३ ॥ धूपंप्रदी
पंतल्पञ्चेत्युपचाराणिषोडश ॥ ६४ ॥ अमूल्यरत्ननिर्माणंनानाचित्रविराजितम् ॥ वरंसिंहासनश्रेष्ठंगृह्यतांशङ्करप्रिये ॥ ६५ ॥ अनन्त
सूत्रप्रभवमीश्वरेच्छाविनिर्मितम् ॥ ज्वलदग्निविशुद्धञ्चवसनंगृह्यतांशिवे ॥ ६६ ॥ अमूल्यरत्नपात्रस्थंनिर्मलंजाह्नवीजलम् ॥ पादप्रक्षा
लनार्थायदुर्गेपाद्यंप्रगृह्यताम् ॥ ६७ ॥ सुगन्धामलकीस्निग्धद्रवमेवसुदुर्लभम् ॥ सुपक्वंविष्णुतैलंचगृह्यतांपरमेश्वरि ॥ ६८ ॥ कस्तूरीकु

ङ्कुमाक्तंचसुगन्धिचन्दनद्रवम् ॥ सुवासितंजगन्मातर्गृह्यतामनुलेपनम् ॥ ६९ ॥ माध्वीकंरत्नपात्रस्थंसुपवित्रंसुमङ्गलम् ॥ मधुपर्कंमहा
देविगृह्यतांप्रीतिपूर्वकम् ॥ ७० ॥ वृक्षभेदमूलचूर्णंगन्धद्रव्यसमन्वितम् ॥ सुपवित्रंमङ्गलार्हंदेविगन्धंगृहाणमे ॥ ७१ ॥ पवित्रंशंखपात्र
स्थंदूर्वापुष्पाक्षतान्वितम् ॥ स्वर्गमन्दाकिनीतोयमर्घ्यंचण्डिगृहाणमे ॥७२॥ सुगन्धिपुष्पश्रेष्ठंचपारिजाततरूद्भवम् ॥ मालत्यादिपुष्प
माल्यंगृह्यतांजगदम्बिके ॥ ७३ ॥ दिव्यंसिद्धान्नमामान्नंपिष्टकंपायसादिकम् ॥ मिष्टान्नंलड्डुकफलंनैवेद्यंगृह्यतांशिवे ॥ ७४ ॥ सुवासि
तंशीततोयंकर्पूरादिसुसंस्कृतम् ॥ मयानिवेदितंभक्त्यागृह्यतांशैलकन्यके ॥ ७५ ॥ गुवाकपर्णचूर्णंचकर्पूरादिसुवासितम् ॥ सर्वभोगवरं
रम्यंताम्बूलंदेविगृह्यताम् ॥ ७६ ॥ अत्यमूल्यरत्नसारनिर्माणमीश्वरेच्छया ॥ सर्वाङ्गशोभनकरंभूषणंदेविगृह्यताम् ॥ ७७ ॥ तरुनिर्य्या
सचूर्णंचगन्धवस्तुसमन्वितम् ॥ हुताशनशिखाशुद्धंधूपंचदेवीगृह्यताम् ॥ ७८ ॥ दिव्यरत्नविशेषंचसान्द्रध्वान्तनिराकृतम् ॥ सुपवित्रंप्र
दीपंचगृह्यतांपरमेश्वरि ॥ ७९ ॥ रत्नसारविनिर्माणंदिव्यंपर्य्यङ्कमुत्तमम् ॥ सूक्ष्मवस्त्रसमाकीर्णंदोवितल्पंप्रगृह्यताम् ॥ ८० ॥ एवंसंपू
ज्यतांदुर्गांदद्यात्पुष्पाञ्जलिंमुने ॥ ततोऽष्टनायिकादेव्यायत्नतःपरिपूजयेत् ॥ ८१ ॥ उग्रचण्डांप्रचण्डांचचण्डोग्रांचण्डनायिकाम् ॥
अतिचण्डांचचण्डांचचण्डांचण्डवतींतथा ॥ ८२ ॥ पद्मेचाष्टदलेचैताःप्रागादिक्रमतस्तथा ॥ पंचोपचारैःसंपूज्यभैरवान्मध्यदेशतः ॥
॥ ८३ ॥ आदौमहाभैरवंचसंहारभैरवंतथा ॥ असिताङ्गभैरवंचरुरुभैरवमेवच ॥ ८४ ॥ ततःकालभैरवश्चक्रोधभैरवमेवच ॥ ताम्रचूडंचन्द्र
चूडमन्तेचभैरवद्वयम् ॥ ८५ ॥ एतान्संपूज्यमध्येचनवशक्तीश्चपूजयेत् ॥ तत्रपद्मेचाष्टदलेमध्येचभक्तिपूर्वकम् ॥ ८६ ॥ वैष्णवींचैवब्रह्मा
णींरौद्रींमाहेश्वरींतथा ॥ नारसिंहींचवाराहीमिन्द्राणींकार्तिकींतथा ॥ ८७ ॥ सर्वशक्तिस्वरूपाञ्चप्रधानांसर्वमङ्गलाम् ॥ नवशक्तीश्चसंपू
ज्यघटेदेवांश्चपूजयेत् ॥ ८८ ॥ शङ्करंकार्त्तिकेयश्चसूर्य्यंसोमंहुताशनम् ॥ वायुञ्चवरुणंचैवदेव्याश्चेटींबटुंतथा ॥ ८९ ॥ चतुःषष्टियोगिनी
श्चसंपूज्यविधिपूर्वकम् ॥ यथाशक्तिबलिंदत्वाकरोतिस्तवनंबुधः ॥ ९० ॥ कवचंचगलेबद्धापठित्वाभक्तिपूर्वकम् ॥ ततःकृत्वापरीहारं

१ माषान्नांमतिपाठः ।

नमस्कुर्य्याद्विचक्षणः ॥ ९१ ॥ बलिदानविधानंचश्रूयतांमुनिसत्तम ॥ मायातिंमहिषंछागंदद्यान्मेषादिकंशुभम् ॥ ९२ ॥ सहस्रवर्षं सुप्रीताडुर्गामायातिदानतः ॥ महिषेणवर्षशतंदशवर्षंचछागलात् ॥ ९३ ॥ वर्षंमेषेणकूष्माण्डैःपक्षिभिर्हरिणैस्तथा ॥ दशवर्षंकृष्णसारैः सहस्राब्दंचगण्डकैः॥ ९४ ॥ कृत्रिमैःपिष्टनिर्माणैःषण्मासंपशुभिस्तथा ॥ मासंसुपक्वादिफलैरक्षतैरितिनारद ॥ ९५ ॥ युवकंव्याधिहीनंचसशृङ्गंलक्षणान्वितम् ॥ विशुद्धमविकाराङ्गंसुवर्णपुष्टमेवच ॥ ९६ ॥ शिशुनाबलिनादातुर्हन्तिपुत्रंचचण्डिका ॥ वृद्धेनैवगुरुजनंकृशेनबांधवस्तथा ॥ ९७ ॥ धनंचैवाधिकाङ्गेनहीनाङ्गेनप्रजान्तथा ॥ कामिनींशृङ्गभङ्गेनकाणेनभ्रातरन्तथा॥ ९८ ॥ घुटिकेनभवेन्मृत्युर्विप्रश्चचित्रमस्तकैः ॥ हतंमित्रंताम्रपृष्ठैर्भ्रष्टश्रीःपुच्छहीनतः ॥ ९९ ॥ मायातीनांचनिर्णीतंश्रूयतांमुनिसत्तम ॥ वक्ष्याम्यथर्ववेदोक्तंफलहानिर्व्यतिक्रमे ॥ १०० ॥ पितृमातृविहीनंचयुवकंव्याधिवर्जितम् ॥ विवाहितंदीक्षितंचपरदाराविहीनकम् ॥ १०१ ॥ अजारजंविशुद्धंचसच्छूद्रमूलकंवरम् ॥ तद्बन्धुभ्योधनंदत्वाक्रीतंमूल्यातिरेकतः ॥ १०२ ॥ स्नापयित्वाचतंधर्मींसंपूज्यवस्त्रचन्दनैः ॥ माल्यैर्धूपैश्चसिन्दूरैर्दधिगोरोचनादिभिः॥१०३॥तंचवर्षंभ्रामयित्वाचरद्वारेणयत्नतः॥वर्षान्तेचसमुत्सृज्यदुर्गायैतंनिवेदयेत् ॥१०४॥ अष्टमीनवमीसन्धौदद्यान्मायातिमेवच ॥ इत्येवंकथितंसर्वंबलिदानंप्रसङ्गतः ॥१०५ ॥ बलिंदत्वाचस्तुत्वाचधृत्वाचकवचंबुधः ॥ प्रणम्यदण्डवद्भूमौदद्याद्विप्रायदक्षिणाम् ॥ १०६ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डेदुर्गोपाख्यानेचतुःषाष्टितमोऽध्यायः ॥ ६४ ॥

॥ नारदउवाच ॥ श्रुतंसर्वंमहाभागसुधारसपरंवरम् ॥ स्तोत्रंचकवचंपूजाफलंकोमंवदप्रभो ॥ १ ॥ नारायणउवाच ॥ आर्द्रायांबोधयेद्देवींमूलेनैवप्रवेशयेत् ॥ उत्तरेनार्च्चनंकृत्वाश्रवणायांविसर्जयेत् ॥ २ ॥ आर्द्रायुक्तनवम्यान्तुकृत्वादेव्याश्चबोधनम् ॥ पूजायाःशतवार्षिक्याःफलमाप्नोतिमानवः ॥ ३ ॥ मूलायान्तुप्रवेशेचनरमेधफलंलभेत् ॥ उत्तरेपूजनंकृत्वावाजपेयफलंलभेत् ॥ ४ ॥ कृत्वाविसर्जनंदेव्याःश्रवणायांचमानवः ॥ लक्ष्मीञ्चपुत्रपौत्राणांलभतेनात्रसंशयः ॥ ५ ॥ भुवःप्रदक्षिणंपुण्यंपूजायांलभतेनरः ॥ नक्षत्रहीनेवर्षेचेत्पा

१ मायारिमितिपाठः । २ कालमितिपाठः ।

र्त्याश्चैवनारद ॥ ६ ॥ नवम्यांबोधनंकृत्वापक्षंसंपूज्यमानवः ॥ अश्वमेधफलंलब्ध्वादशम्यांचविसर्जयेत् ॥ ७ ॥ सप्तम्यांपूजनंकृत्वा बलिंदद्याद्विचक्षणः ॥ अष्टम्यांपूजनंशस्तंबलिदानविवर्जितम् ॥ ८ ॥ अष्टम्यांबलिदानेनविपत्तिर्जायतेनृणाम् ॥ दद्याद्विचक्षणोभ त्त्यानवम्यांविधिवद्बलिम् ॥ ९ ॥ बलिदानेनविप्रेन्द्रदुर्गाप्रीतिर्भवेन्नृणाम् ॥ हिंसाजन्यञ्चपापञ्चलभतेनात्रसंशयः ॥ १० ॥ उत्सर्ग कर्त्तादाताचछेत्तापोष्टाचरक्षकः ॥ अग्रेपश्चान्निबद्धाचसप्तैतेवधभागिनः ॥ ११ ॥ योयंहन्तिसतंहन्तिचेतिवेदोक्तमेवच ॥ कुर्वन्तिवैष्ण वीपूजांवैष्णवास्तेनहेतुना ॥ १२ ॥ एवंसंपूज्यसुरथःपूर्णंवर्षञ्चभक्तितः ॥ कवचञ्चगलेबद्धातुष्टावपरमेश्वरीम् ॥ १३ ॥ स्तोत्रेणपरितु ष्टासातस्यसाक्षाद्बभूवह ॥ सददर्शपुरोदेवींग्रीष्मसूर्य्यसमप्रभाम् ॥ १४ ॥ तेजःस्वरूपांपरमांसगुणांनिर्गुणांवराम् ॥ दृष्ट्वातांकमनीयां चतेजोमण्डलमध्यतः ॥ १५ ॥ स्वेच्छामयींकृपारूपांभक्तानुग्रहकातराम् ॥ पुनस्तुष्टावराजेन्द्रोभक्तिनम्रात्मकन्धरः ॥ १६ ॥ स्तवे नपरितुष्टासासस्मिताभक्तिपूर्वकम् ॥ उवाचसत्यंराजेन्द्रंकृपयाजगदम्बिका ॥ १७ ॥ प्रकृतिरुवाच ॥ साक्षात्संप्राप्यमांराजन्वृणोषि विभवंवरम् ॥ ददामितुभ्यंविभवंसाम्प्रतंवाञ्छितंतव ॥ १८ ॥ निर्जित्यसर्वाञ्शत्रूंश्चलभराज्यमकण्टकम् ॥ भविष्यसिमहाराजसावर्णि रष्टमोमनुः ॥ १९ ॥ दास्यामितुभ्यंज्ञानञ्चपरिणामेनराधिप ॥ भक्तिंदास्यंचपरमेश्रीकृष्णेपरमात्मनि ॥ २० ॥ वृणोतिविभवंयोहि साक्षान्मांप्राप्यमन्दधीः ॥ माययावञ्चितःसोऽपिविषमत्त्यमृतंत्यजेत् ॥ २१ ॥ ब्रह्मादिस्तम्बपर्य्यन्तंसर्वंनश्वरमेवच ॥ नित्यंसत्यंपरंब्र ह्मकृष्णंनिर्गुणमेवच ॥ २२ ॥ ब्रह्मविष्णुशिवादीनामहमाद्यापरात्परा ॥ सगुणानिर्गुणाचापिवरास्वेच्छामयीसदा ॥ २३ ॥ नित्यानित्या सर्वरूपासर्वकारणकारणा ॥ बीजरूपाचसर्वेषांमूलप्रकृतिरीश्वरी ॥ २४ ॥ पुण्येवृन्दावनेरम्येगोलोकेरासमण्डले ॥ राधाप्राणाधिकाह ञ्चकृष्णस्यपरमात्मनः ॥ २५ ॥ अहंदुर्गाविष्णुमायाबुद्ध्यधिष्ठातृदेवता ॥ अहंलक्ष्मीश्चवैकुंठेस्वयंदेवीसरस्वती ॥ २६ ॥ सावित्रीवेद माताऽहंब्राह्मणीब्रह्मलोकतः ॥ अहंगङ्गाचतुलसीसर्वाधारावसुन्धरा ॥ २७ ॥ नानाविधाहंकलयामाययासर्वयोषितः ॥ साहंकृष्णेनसृष्टा

१ मुक्तिंदास्यंचपरममितिपाठः ।

चभ्रूभङ्गलीलयानृप ॥ २८ ॥ भ्रूभङ्गलीलयासृष्टोयेनपुंसामहान्विराट् ॥ यस्यलोम्नांकूपेषुविश्वानिसन्तिनित्यशः ॥ २९ ॥ असंख्या
निचतान्येवकृत्रिमाणिचमायया ॥ अनित्येषुनित्यबुद्धिंसर्वेकुर्वन्तिसन्ततम् ॥ ३० ॥ सप्तसागरसंयुक्तासप्तद्वीपावसुन्धरा ॥ तदधःसप्त
पातालाःस्वर्लोकाश्चैवसप्तच ॥ ३१ ॥ एवंविश्वश्चनिर्माणंब्रह्माण्डंब्रह्मणाकृतम् ॥ प्रत्येकंसर्वब्रह्माण्डेब्रह्मविष्णुशिवादयः ॥ ३२ ॥ सर्वे
षामीश्वरःकृष्णइतिज्ञानंपरात्परम् ॥ वेदानांचव्रतानाश्चतीर्थानांतपसांतथा ॥ ३३ ॥ देवानाश्चैवपुण्यानांसारःकृष्णइतिस्मृतः ॥ तद्भ
क्तिहीनोयोमूढःसचजीवन्मृतोध्रुवम् ॥३४॥ पवित्राणिचतीर्थानितद्भक्तस्पर्शवायुना ॥ तन्मन्त्रोपासकश्चैवजीवन्मुक्तइतिस्मृतः॥३५॥
मन्त्रग्रहणमात्रेणनरोनारायणोभवेत् ॥ विनाजपेनतपसाविनातीर्थेनपूजया ॥ ३६ ॥ मातामहानांशतकंपितॄणांचसहस्रकम् ॥ पुंसामे
वंसमुद्धृत्यगोलोकंसचगच्छति ॥ ३७ ॥ इदंज्ञानंसारभूतंकथितं तेनराधिप ॥ मन्वन्तरान्तेभोगान्तेभक्तिंदास्यामितेहरौ ॥ ३८ ॥ माभु
क्तंक्षीयतेकर्म्मकल्पकोटिशतैरपि ॥ अवश्यमेवभोक्तव्यंकृतंकर्म्मशुभाशुभम्॥३९॥अहंयमनुगृह्णामितस्मैदास्यामिनिर्म्मलाम् ॥ निश्चलां
सुदृढांभक्तिंश्रीकृष्णेपरमात्मनि ॥ ४०॥ करोमिवश्चनांयंयं तेभ्योदास्यामिसम्पदम् ॥ प्रातःस्वप्नस्वरूपञ्चमिथ्येतिभ्रमरूपिणीम्॥४१॥
इतितेकथितंज्ञानंगच्छवत्सयथासुखम् ॥ इत्युक्त्वाचमहादेवीतत्रैवान्तरधीयत ॥ ४२ ॥ राजासंप्राप्यराज्यश्चनत्वातांप्रययौगृहम् ॥
इतितेकथितंवत्सदुर्गोपाख्यानमुत्तमम् ॥ ४३ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेप्रकृतिखण्डेनारायणनारदसंवादेदुर्गोपाख्यानेप्रकृतिसुर
थसंवादेज्ञानकथनंनामपञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ छ ॥ ॥ छ ॥ ॥छ॥
नारदउवाच ॥ श्रुतंसर्वंनावशिष्टंकिञ्चिदेवाहिनिश्चितम् ॥ प्रकृतेःकवचंस्तोत्रंब्रूहिमेमुनिसत्तम॥१॥ नारायणउवाच॥ पुरास्तुतासागोलो
केकृष्णेनपरमात्मना ॥ संपूज्यमधुमासेचप्रीतेनरासमण्डले ॥ मधुकैटभयोर्युद्धेद्वितीयेविष्णुनापुरा ॥ २॥ तत्रैवकालेसादुर्गाब्रह्मणाप्राण
सङ्कटे॥चतुर्थेसंस्तुतादेवीभक्त्याचात्रिपुरारिणा ॥३॥ पुरात्रिपुरयुद्धेचमहाघोरतरेमुने ॥ पञ्चमेसंस्तुतादेवीवृत्रासुरवधेतथा ॥४॥शक्रेणस
र्वदेवैश्चघोरेचप्राणसङ्कटे॥तदामुनीन्द्रैर्मनुभिर्मानवैःसुरथादिभिः॥५॥ संस्तुतापूजितासाचकल्पेकल्पेपरात्परा॥स्तोत्रञ्चश्रूयतांब्रह्मन्सर्व

विघ्नविनाशनम् ॥ सुखदंमोक्षदंसारंभवाब्धिपारकारणम् ॥६॥ श्रीकृष्णउवाच ॥ त्वमेवसर्वजननीमूलप्रकृतिरीश्वरी ॥ त्वमेवाद्यासृष्टिविधौ
स्वेच्छयात्रिगुणात्मिका ॥७॥ कार्य्यार्थेसगुणात्वञ्चवस्तुतोनिर्गुणास्वयम् ॥ परब्रह्मस्वरूपात्वंसत्यानित्यासनातनी ॥८॥ तेजःस्वरूपा
परमाभक्तानुग्रहविग्रहा ॥ सर्वस्वरूपासर्वेशासर्वाधारापरात्परा ॥९॥ सर्वबीजस्वरूपाचसर्वपूज्यानिराश्रया ॥ सर्वज्ञासर्वतोभद्रासर्वमङ्ग
लमङ्गला ॥१०॥ सर्वबुद्धिस्वरूपाचसर्वशक्तिस्वरूपिणी ॥ सर्वज्ञानप्रदादेवीसर्वज्ञासर्वभाविनी ॥ ११ ॥ त्वंस्वाहादेवदानेचपितृदानेस्व
धास्वयम् ॥ दक्षिणासर्वदानेचसर्वशक्तिस्वरूपिणी ॥ १२ ॥ निद्रात्वञ्चदयात्वञ्चतृष्णात्वञ्चात्मनश्चमे ॥ क्षुत्क्षान्तिःशान्तिरीशाच
कान्तिःसृष्टिश्चशाश्वती ॥ १३ ॥ श्रद्धापुष्टिश्चतन्द्राचलज्जाशोभादयासदा ॥ सतांसम्पत्स्वरूपाश्रीर्विपत्तिरसतामिह ॥ १४ ॥ प्री
तिरूपापुण्यवतांपापिनांकलहाङ्कुरा ॥ शश्वत्कर्ममयीशक्तिःसर्वदासर्वजीविनाम् ॥ १५ ॥ देवेभ्योस्वपदंदात्रीधातुर्धात्रीकृपामयी ॥
हितायसर्वदेवानांसर्वासुरविनाशिनी ॥ १६ ॥ योगनिद्रायोगरूपायोगदात्रीचयोगिनाम् ॥ सिद्धिस्वरूपासिद्धानांसिद्धिदासिद्धियोगि
नी ॥ १७ ॥ माहेश्वरीचब्रह्माणीविष्णुमायाचवैष्णवी ॥ भद्रदाभद्रकालीचसर्वलोकभयङ्करी ॥ १८ ॥ ग्रामेग्रामेग्रामदेवीगृहदेवीगृहेगृहे
॥ सतांकीर्तिःप्रतिष्ठाचनिन्दात्वमसतांसदा ॥ १९ ॥ महायुद्धेमहामारीदुष्टसंहाररूपिणी ॥ रक्षास्वरूपाशिष्टानांमातेवहितकारिणी
॥ २० ॥ वन्द्यापूज्यास्तुतात्वंचब्रह्मादिनाञ्चसर्वदा ॥ ब्राह्मण्यरूपाविप्राणांतपस्याचतपस्विनाम् ॥ २१ ॥ विद्याविद्यावतांत्वञ्चबु
द्धिर्बुद्धिमतांसताम् ॥ मेधास्मृतिस्वरूपाचप्रतिभाप्रतिभावताम् ॥ २२ ॥ राज्ञांप्रतापरूपाचविशांवाणिज्यरूपिणी ॥ सृष्टौसृष्टिस्व
रूपात्वंरक्षारूपाचपालने ॥ २३ ॥ तथान्तेत्वंमहामारीविश्वस्यविश्वपूजिते ॥ कालरात्रिर्म्महारात्रिर्मोहरात्रिश्चमोहिनी ॥ २४ ॥
दुरत्ययामेमायात्वंययासंमोहितंजगत् ॥ ययामुग्धोहिविद्वांश्चमोक्षमार्गंनपश्यति ॥ २५ ॥ इत्यात्मनाकृतंस्तोत्रंदुर्गायादुर्गनाशनम् ॥
पूजाकालेपठेद्योहिसिद्धिर्भवतिवाञ्छिता ॥ २६ ॥ वन्ध्याचकाकवन्ध्याचमृतवत्साचदुर्भगा ॥ श्रुत्वास्तोत्रंवर्षमेकंसुपुत्रंलभतेध्रुवम् ॥

१ सिद्धंभवतिवांछितमितिपाठः ।

॥ २७ ॥ कारागारेमहाघोरेयोबद्धोदृढबन्धने ॥ श्रुत्वास्तोत्रंमासमेकंबन्धनान्मुच्यतेध्रुवम् ॥ २८ ॥ यक्ष्मग्रस्तोगलत्कुष्ठीमहाशूलीम
हाज्वरी ॥ श्रुत्वास्तोत्रंवर्षमेकंसद्योरोगात्प्रमुच्यते ॥ २९ ॥ पुत्रभेदेप्रजाभेदेपत्नीभेदेचदुर्गतः ॥ श्रुत्वास्तोत्रंमासमेकंलभतेनात्रसं
शयः ॥ ३० ॥ राजद्वारेश्मशानेचमहारण्येरणस्थले ॥ हिंस्रजन्तुसमीपेचश्रुत्वास्तोत्रंप्रमुच्यते ॥ ३१ ॥ गृहदाहेचदावाग्नौदस्युसैन्य
समन्विते ॥ स्तोत्रश्रवणमात्रेणलभतेनात्रसंशयः ॥ ३२ ॥ महादरिद्रोमूर्खश्चवर्षंस्तोत्रंपठेत्तुयः ॥ विद्यावान्धनवांश्चैवसभवेन्नात्रसंशयः
॥ ३३ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डेदुर्गोपाख्यानेदुर्गास्तोत्रंनामषट्षष्टितमोऽध्यायः ॥ ६६ ॥ छ ॥
॥ नारदउवाच ॥ भगवन्सर्वधर्म्मज्ञसर्वज्ञानविशारद ॥ ब्रह्माण्डमोहनंनामप्रकृतेःकवचंवद ॥ १ ॥ नारायणउवाच ॥ शृणुवक्ष्यामिहे
वत्सकवचञ्चसुदुर्लभम् ॥ श्रीकृष्णेनैवकथितंकृपयाब्रह्मणेपुरा ॥ २ ॥ ब्रह्मणाकथितंसर्वंधर्मायजाह्नवीतटे ॥ धर्मेणदत्तंमह्यञ्चकृपयापुष्करे
प्रभुः ॥ ३ ॥ त्रिपुरारिश्चयद्धृत्वाजघानत्रिपुरंपुरा ॥ मुमोचब्रह्मायद्धृत्वामधुकैटभयोर्भयम् ॥ संजहाररक्तबीजंयद्धृत्वाभद्रकालिका ॥ ४ ॥
यद्धृत्वातुमहेन्द्रश्चसंप्रापकमलालयाम् ॥ यद्धृत्वाचमहाकालश्चिरजीवीचधार्मिकः ॥ ५ ॥ यद्धृत्वाचमहाज्ञानीनन्दीसानन्दपूर्वकम् ॥
यद्धृत्वाचमहायोद्धारामःशत्रुभयङ्करः ॥ ६ ॥ यद्धृत्वाशिवतुल्यश्चदुर्वासाज्ञानिनांवरः ॥ ओंदुर्गेतिचतुर्थ्यन्तंस्वाहान्तोमेशिरोऽवतु ॥ ७ ॥
मन्त्रःषडक्षरोऽयञ्चभक्तानांकल्पपादपः ॥ विचारोनास्तिवेदेषुग्रहणेचमनोर्मुने ॥ ८ ॥ मन्त्रग्रहणमात्रेणविष्णुतुल्योभवेन्नरः ॥ ममवक्त्रं
सदापातुओंदुर्गायैनमोऽन्ततः ॥ ९ ॥ ॐदुर्गेरक्षइतिचकण्ठंपातुसदामम ॥ ॐह्रींश्रींइतिमन्त्रोऽयंस्कन्धंपातुनिरन्तरम् ॥ १० ॥ ॐ
ह्रींश्रींक्लींइतिपृष्ठञ्चपातुमेसर्वतःसदा ॥ ह्रींमेवक्षस्थलंपातुहस्तंश्रीमितिसन्ततम् ॥ ११ ॥ ॐश्रींह्रींश्रींपातुसर्वाङ्गंस्वप्नेजागरणेतथा
॥ प्राच्यांमांपातुप्रकृतिःपातुवह्नौचचण्डिका ॥ १२ ॥ दक्षिणेभद्रकालीचनैरृत्यांचमहेश्वरी ॥ वारुण्यांपातुवाराहीवायव्यांसर्वमङ्गला
॥ १३ ॥ उत्तरेवैष्णवीपातुतथैशान्यांशिवप्रिया ॥ जलेस्थलेचान्तरिक्षेपातुमांजगदम्बिका ॥ १४ ॥ इतितेकथितंवत्सकवचञ्चसुदुर्ल

१ पूर्वमितिपाठः । २ बाणइतिपाठः । ३ शिवतुल्यइतिपाठः ।

म् ॥ यस्मैकस्मैनदातव्यंप्रवक्तव्यंनकस्यचित् ॥ १५ ॥ गुरुमभ्यर्च्यविधिवद्वस्त्रालङ्कारचन्दनैः ॥ कवचंधारयेद्यस्तुसोऽपिविष्णुर्नसंश
यः ॥ १६ ॥ भ्रमणेसर्वतीर्थानांपृथिव्याश्चप्रदक्षिणे ॥ यत्फलंलभतेलोकस्तदेतद्धारणेमुने ॥ १७ ॥ पञ्चलक्षजपेनैवसिद्धमेतद्भवेद्ध्रुव
म् ॥ लोकंचसिद्धकवचंनास्त्रंविध्यतिसङ्कटे ॥ १८ ॥ नतस्यमृत्युर्भवतिजलेवह्नौविशेद्ध्रुवम् ॥ जीवन्मुक्तोभवेत्सोऽपिसर्वसिद्धेश्वरःस्व
यम् ॥ १९ ॥ यदिस्यात्सिद्धकवचोविष्णुतुल्योभवेद्ध्रुवम् ॥ कथितंप्रकृतेःखण्डंसुधाखण्डात्परंमुने ॥ २० ॥ याएवमूलप्रकृतिर्यस्याः
पुत्रोगणेश्वरः ॥ कृत्वाकृष्णव्रतंसाचलेभेगणपतिंसुतम् ॥ २१ ॥ स्वांशेनकृष्णोभगवान्बभूवचगणेश्वरः ॥ श्रुत्वाचप्रकृतेःखण्डंसुश्रवञ्च
सुधोपमम् ॥ २२ ॥ भोजयित्वाचदध्यन्नंतस्मैदद्याच्चकांचनम् ॥ सवत्सांसुरभींरम्यांदद्याच्चभक्तिपूर्वकम् ॥ २३ ॥ वासोऽलङ्काररत्नै
श्चतोषयेद्वाचकंमुने ॥ पुष्पालङ्कारवसनैर्नानोपाहारसंयुतैः ॥ २४ ॥ पुस्तकंपूजयेदेवंभक्तिश्रद्धासमन्वितः ॥ एवंकृत्वायःशृणोतितस्य
विष्णुःप्रसीदति ॥ २५ ॥ वर्द्धतेपुत्रपौत्रादिर्यशस्वीतत्प्रसादतः ॥ लक्ष्मीर्वसतितद्गेहेह्यन्तेगोलोकमाप्नुयात् ॥ लभेत्कृष्णस्यदास्यंस
भक्तिंकृष्णेसुनिश्चलाम् ॥ २६ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेनारायणनारदसंवादेप्रकृतिखण्डेदुर्गोपाख्यानेप्रकृतिकवचंनामसप्तषष्टि
तमोऽध्यायः ॥ ६७ ॥ ॥ छ ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥ ॥ छ ॥

## ॥ समाप्तश्चायं श्रीब्रह्मवैवर्ते प्रकृतिखण्डः ॥



---

१ रुद्रपाठः ।

